# Tamil Nadu.
## For a holiday, holiweek or holimonth.



Whether for a short or long stopover Tamil Nadu is the place to come. You'll be treated to a tantalising mix of nature, heritage and fun. From mountains, waterfalls, forests and beaches to art, architecture, bird and wildlife sanctuaries, water sports facilities, entertainment parks and exhibitions. Come, experience the perfect holiday.













DIPR/DIS/ 221 /FLAME/2002



**Commissioner of Tourism**
Tamil Nadu Tourism Complex, Walajah Road, Chennai-600 002.
Ph: 91-44-538 8785, 536 1640. Telefax : 91-44-536 2772.
e-mail : dt-tour@tn.nic.in

For exciting package tours, discounts, accommodation and tour details please contact

Tamil Nadu Tourism Development Corporation Limited

**Sales counters :**
No.4, EVR Salai, (Opp. Central Railway Station) Chennai - 600 003.
Ph: 91-44-538 9132, 538 2916, 536 0294. Telefax : 91-44-536 1385
II Floor, LLA Building, 735, Anna Salai, Chennai-600 002. Ph: 91-44841 1077.
http : //www.tamilnadutourism.org e-mail : ttdc@md3.vsnl.net.in

Tourist Offices : * New Delhi : 011-336 3607 * Mumbai : 022-4110118 * Kolkata : 033-472 9611 *Goa : 0832-226390

# एतस्य अङ्कस्य विशेषाः सम्पुटः - १९ एप्रिल् - २००२ सञ्चिका - ०१



भारतगौरवगाथा

२५



राज्ञः वानप्रस्थः (वेतालकथा)

१९



मायासरोवरम्

११



विघ्नेश्वरः

४५

## अन्तरङ्गम्






**SUBSCRIPTION**

**For USA and Canada**
**Single copy $2**
**Annual subscription $20**
***Remittances in favour of Chandmama India Ltd.***
to
**Subscription Division**
CHANDAMAMA INDIA LIMITED
No. 82, Defence Officers Colony
Ekkatuthangal, Chennai - 600 097
E-mail : subscription@chandamama.org

**उपायनीक्रियताम्**
वायुयानेन भारतेतरदेशान् प्रति
**वार्षिकं (१२ सञ्चिकाः) - रू.१००/-**
**भारते रू. १२०/- (बुक्पोस्ट् द्वारा)**
भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा
'Chandamama India Limited'
नाम्ना प्रेषणीयम् ।

भारतनायकस्पर्धायां भागम् ऊढ्वा प्राप्नुवन्तु अपूर्वाणि पारितोषिकाणि

# भारतीयाः नायकाः-७

भारते शास्त्रीयसङ्गीतस्य श्रेष्ठा परम्परा अस्ति । तस्यां परम्परायां स्थितान् कांश्चन सङ्गीतज्ञान् अधिकृत्य सन्ति एतस्य मासस्य प्रश्नाः । उत्तरं दातुं प्रयतन्ताम् ।

**समुचितोत्तरदातारः त्रयः पुरस्क्रियन्ते द्विचक्रिकादानेन**

1. कर्णाटकसङ्गीतज्ञः कश्चन २४०००गीतानि रचितवान् । तस्य स्मारकं कावेरीनद्याः तीरे तिरुवैयारुप्रदेशे अस्ति । सः कः इति किं भवन्तः जानन्ति ?.................................................

2. एषः तबलावादकः वाद्यवादकेषु अग्रणीत्वं प्राप्तवान् आसीत् । तस्य पुत्रः झाकीरहुसेनः अपि पितृसदृशः एव आसीत् तबला-वादनक्षेत्रे । किं भवन्तः स्मरन्ति तस्य नाम ?

.................................................



3. एषः सङ्गीतज्ञः चक्रवर्तिनः अकबरस्य आस्थाने आसीत् । सः यदा दीपकरागं गायति स्म तदा दीपाः स्वयं प्रवर्तन्ते स्म इति श्रूयते । तस्य नाम किम् ?

.................................................

4. शहनायीवाद्यवादनक्षेत्रे अद्वितीयः सः कः यश्च गते वर्षे 'भारतरत्न'प्रशस्त्या विभूषितः जातः ?

.................................................

5. यस्य पूर्वाश्रमस्य नाम आसीत् श्रीनिवासनायक् इति, यश्च अग्रे कर्णाटकसङ्गीतस्य कृते दृढम् आधारं कल्पितवान्, सः श्रेष्ठपुरुषः कः इति किं जानन्ति भवन्तः ?

.................................................

प्रतिप्रश्नम् उत्तरं लिखन्तु । एतेषु पञ्चसु नायकेषु प्रियतमः कः किमर्थं च इति दशभिः शब्दैः लिखन्तु । मम प्रियतमः नायकः .................................................

.................................................

.................................................

.................................................

भागग्रहीतुः नाम .................................................

वयः .................... कक्ष्या ....................

सङ्केतः .................................................

.................................................

.................................................

पिन् .................... दूरवाणी ....................

एतं पुटं पृथक्कृत्य प्रेषयन्तु अधोनिर्दिष्टसङ्केताय -

**भारतनायकस्पर्धा-७**
चन्दमामा इण्डिया लिमिटेड्,
८२, डिफेन्स् आफीसर्स् कालोनी
एक्काटुतङ्गल्, चेन्नै - ६०० ०९७
उत्तरप्रेषणाय अन्तिमदिनाङ्कः - ५, मे - २००२

***नियमाः* -**

१. अधिकाष्ट-ऊनचतुर्दशवर्षीयाः एतस्यां स्पर्धायां भागं ग्रहीतुम् अर्हन्ति ।
२. विविधभाषाभिः प्रेषितानि उत्तराणि परिशील्य त्रयः श्रेष्ठाः चीयन्ते । यदि योग्योत्तरदातारः बहवः तर्हि प्रियतमनायकविषये लिखितं वाक्यम् अवलम्ब्य चयनं क्रियते ।
३. निर्णायकानां निर्णयः एव अन्तिमः ।
४. एतं विषयम् अधिकृत्य पत्रव्यवहारः कोऽपि न करणीयः ।
५. विजेतारः पत्रद्वारा सूच्यन्ते ।



*संस्थापकौ –*
**चक्रपाणिः नागिरेड्डी च**

# भूमिदिनम् उपलक्ष्य

वयम् एतस्यां भूम्यां वसामः । अत्रत्य मृत्तिका, भूमिस्थम् ऐश्वर्यं, भूमौ वर्धमानानि सस्यानि, भूमौ प्राप्यमाणं जलं, पशुपक्षिणः इत्यादीनां सर्वेषाम् उपयोगं प्राप्नुमः । यावज्जीवं सुखेन एव जीवामः । भूमेः उपयोगार्थम् अधिकारवन्तः वयम् ।

कदाचित् अस्माकं व्यवहारः अन्यथा भवति । भूमेः स्वामिनः वयम् एव, नान्ये इति चिन्तयन्तः वयम् एतस्याः उपयोगविषये स्वेच्छाचारं दर्शयामः । अत्र यत् प्राप्यते तत् विभज्य अनुभोक्तव्यम् इत्येतत् विस्मरामः । स्वेच्छया भूमेः नाशनम् अपि कुर्मः वयम् । यदि एषा एव प्रवृत्तिः अनुवर्तेत तर्हि अस्माकं सुखमयजीवनस्य कारणीभुताः भूमिस्थाः अंशाः अपि नाशं प्राप्नुयुः । ततः अस्माकं जीवनं घोरं स्यात् ।

एषु दिनेषु जैविकास्त्रस्य उपयोगस्य सम्भावना आधिक्येन दृश्यते । एतत् यदि उपयुक्तं स्यात् तर्हि न केवलं प्रतिपक्षीयाः, अपि तु समग्रं प्राणिकुलं सस्यकुलं चापि विनाशं गच्छेत् । भूमिः, जलं, वायुः च कलुषीक्रियमाणम् अस्ति अद्य । अन्ये जीविनः अस्मत्पूर्वजाः च कोटिशः वर्षाणि अत्र जीवितवन्तः । किन्तु अद्य तेषु काश्चन जीवजातयः न दृश्यन्ते । पुनः काश्चन अन्तिमक्षणान् गणयन्त्यः सन्ति ।

अग्रिमजनानां निमित्तम् अस्माभिः अद्य वक्तव्यम् अस्ति 'भूमिः संरक्ष्यताम्' इति । मातृतुल्यायाः भूमेः हानिं निवारयितुम् अस्माभिः सर्वैः बद्धकटिभिः भवितव्यम् । 'माता भूमिः, पुत्रोऽहं पृथिव्याः' इत्येतस्य वेदवाक्यस्य आशयः कदापि न विस्मर्तव्यः अस्माभिः ।

*सम्पादकः* – **विश्वम्**



# किं दीयते मह्यम् ?

रमाचन्द्रः कश्चन वणिक् । सः महाकृपणः, परमलोभी च । स्वार्थस्य मूर्तिमान् विग्रहः एव आसीत् सः । लाभं विना सः कदापि किमपि कार्यं न करोति स्म सर्वथा ।

तदीये एव गृहे चमनः भाटकं दत्त्वा वसति स्म । सः ग्रामे लघूनि विविधानि कार्याणि कुर्वन् जीवनं यापयति स्म । तस्य सम्पादनं बहु अल्पम् । सः अन्यस्मात् ग्रामात् आगत्य अत्र वासम् आरब्धवान् आसीत् ।

एकस्मिन् दिने रमाचन्द्रः स्वस्य आपणतः प्रत्यागमनसमये स्वगृहात् बहिरागच्छन्तीं चमनस्य पुत्रीं कल्याणीं दृष्टवान् ।

सः ताम् अपृच्छत् – "पुत्रि ! किं कार्यम् आसीत् अत्र ?" इति ।

"नारिकेलं भञ्जयितुं लवित्रम् आवश्यकम् आसीत् । तत् भवतः गृहतः नीतवती आसम् । इदानीं प्रत्यर्पयितुम् आगता" इति उक्तवती कल्याणी ।

तदा रमाचन्द्रेन मधुरस्वरेण उक्तम् – "लवित्रं तु आनीय प्रतिदत्तम् । युक्तम् एतत् । किन्तु तस्य उपयोगः यः कृतः तस्य प्रतिफलरूपेण एकं नारिकेलं दातव्यं खलु ? तत् न दत्तं भवत्या" इति ।

कल्याणी तत्क्षणे एव धावन्ती स्वगृहं गत्वा एकं नारिकेलम् आनीय रमाचन्द्राय दत्तवती ।

अन्यस्मिन् दिने मध्याह्ने भोजनार्थम् आगतः रमाचन्द्रः पुनरपि स्वगृहे कल्याणीं दृष्ट्वा अपृच्छत् – "कल्याणि, किमर्थम् आगता भवती?" इति ।

"अद्य पर्वदिनं किल ? पाककार्ये कटाहकस्य आवश्यकता आसीत् मातुः । तं भवतः गृहतः नीतवती आसम् । पाककार्यं समाप्तम् । तं कटाहकं प्रत्यर्पयितुम् आगता" इति हसन्ती उक्तवती कल्याणी ।

"कटाहकः प्रत्यर्पितः इति तु सत्यम् । किन्तु तस्य उपयोगः कृतः इति कारणात्

प्रतिफलरूपेण मह्यं किम् आनीतवती भवती ?'' इति पृष्टवान् रमाचन्द्रः ।

एतत् श्रुत्वा कल्याण्या चिन्तितं यत् मया असमीचीनं कृतम् इति । सा शीघ्रं स्वगृहं गत्वा एकस्यां स्थालिकायां द्वित्रप्रकारकं खाद्यं संस्थाप्य आनीय दत्तवती ।

तदा रमाचन्द्रः सन्तोषेण तां प्रशंसन् अवदत् - ''पश्यतु पुत्रि ! इतःपरं यत्किमपि वस्तु अस्माकं गृहतः नीयते चेत् तस्य प्रत्यर्पणसमये प्रतिफलरूपेण यत्किमपि आनीय ददातु मम वचनं विनैव । तदा मम महान् सन्तोषः भविष्यति । भवती च प्रशंसापात्रं भविष्यति'' इति ।

कल्याणी हसन्ती ततः निर्गता ।

सप्ताहानन्तरम् एकदा रमाचन्द्रः अन्यस्मात् गृहात् आगतः । तदा सः स्वगृहात् निर्गच्छन्तीं कल्याणीं दृष्टवान् ।

''कल्याणि ! किमपि प्रत्यर्पयितुम् आगता आसीत् किम् ?'' इति हसन् तां पृष्टवान् रमाचन्द्रः ।

''आम् ! केवलं प्रत्यर्पणं न, भवतः कथनं विनैव कार्यसमाप्त्यनन्तरं यत् कर्तव्यं तदपि कृतम्'' इति उक्तवती कल्याणी ।

''किं नीतम् आसीत् भवत्या ?'' - रमाचन्द्रः पृष्टवान् ।

''मूषकयन्त्रं नीतम् आसीत् । अस्माकं गृहे बहवः मूषकाः । तैः क्रियमाणा पीडा सोढुं न शक्यते स्म । केचन मूषकाः मूषकयन्त्रे पतिताः अपि । नयनस्य प्रतिफलरूपेण किमपि दातव्यमेव खलु ? अतः मूषकयन्त्रे पतितं मूषकद्वयम् आनीय भवतः गृहे त्यक्तवती । मूषकयन्त्रं च भवतः पुत्रस्य हस्ते दत्तवती । भवतः वचनम् अहं कदापि न विस्मरामि'' इति कल्याण्या उक्तम् ।

एतत् श्रुतवतः रमाचन्द्रस्य शिरोभ्रमणम् आरब्धम् । क्षणपर्यन्तं तस्य मुखतः कोऽपि शब्दः न निःसृतः ।

अस्याः घटनायाः अनन्तरं रमाचन्द्रस्य स्वभावे परिवर्तनम् आगतम् । तदारभ्य तेन 'मह्यं किं दीयते ?' इति कथनमेव त्यक्तम् ।



# प्राणभयम्

कस्मिंश्चित् अरण्ये कश्चन शशः निवसति स्म । कदाचित् सः प्रमादवशात् गर्ते पतितः । तत्र जलम् अपि आसीत् । किन्तु जलम् अधिकं तु न आसीत् इत्यतः सः निमज्जितः न जातः । किन्तु गर्तस्य गभीरताकारणतः सः महतः प्रयत्नस्य अनन्तरम् अपि उपरि आगन्तुं न शक्तः ।

'मम मरणम् अत्रैव निश्चितम्' इति चिन्तयन् आसीत् सः शशः । तावता उभौ शशौ, एकः मर्कटः च तेनैव मार्गेण गच्छन्तः गर्ते पतितं तं शशं दृष्टवन्तः । ते त्रयः अपि मिलित्वा शशम् उन्नेतुं महान्तं प्रयत्नं कृतवन्तः । तथापि ते न सफलाः । तदा गर्तस्थः शशः अवदत् - ''भवतां प्रयत्नः न सफलः । अतः भवन्तः इतः गच्छन्तु नाम'' इति ।

ते स्वस्य असाफल्यस्य विषये लज्जिताः, शशस्य दुरवस्थां दृष्ट्वा खिन्नाः च । तथापि ते असहायाः आसन् । अतः ते ततः निर्गताः । अल्पे एव काले कश्चन शृगालः रवं कुर्वन् तं प्रदेशं प्रति आगतः । शृगालस्य ध्वनेः श्रवणेन शशः नितरां भीतः । 'प्राणाः कथञ्चित् रक्षणीयाः एव' इति विचिन्त्य सः सर्वं बलम् एकत्रीकृत्य उत्कूर्दनम् अकरोत् । अहो, गर्ततः उपरि आगन्तु अशक्नोत् एव सः । ततः क्षणाभ्यन्तरे सः ततः पलायितवान् ।

एवं धावतः तस्य मार्गे उभौ शशौ मर्कटः च मिलिताः । एतं शशं दृष्ट्वा ते आश्चर्यचकिताः । ते आश्चर्यपूर्णस्वरेण पृष्टवन्तः - ''महान्तं प्रयत्नं कृत्वा अपि भवन्तम् उपरि आनेतुं वयं न शक्ताः । एवं स्थिते कथं भवान् उपरि आगन्तुं शक्तः जातः ?'' इति ।

तदा शशः अवदत् - ''शृगालस्य ध्वनिं श्रुतवतः मम हृदये महती भीतिः उत्पन्नाः । प्राणभयं सर्वम् अकारयत् । अतः अहम् उपरि आगन्तुं शक्तः'' इति ।

एतत् श्रुत्वा शशौ मर्कटः च हसितवन्तः ।






प्राचीनकालीना कथा एषा । अमरावती-राज्यस्य आस्थाने कुलशेखरो नाम कश्चन कर्मकारः आसीत् । जयशीलः तस्य एकमात्रपुत्रः । बाल्ये एव तदीया माता दिवङ्गता आसीत् । अतः कुलशेखरः स्वकीयं पुत्रं महत्या प्रीत्या पोषितवान् आसीत् । यौवन-प्राप्तिसमये जयशीलः अनेकासु विद्यासु क्षत्रियोचितेषु युद्धकौशलेषु च प्रवीणः जातः आसीत् ।

कुलशेखरस्य इच्छा आसीत् यत् तदीयः पुत्रः आस्थाने कार्यं कुर्वन् राज्ञः कृपापात्रं भवेत् इति । अतः सः पुत्रं राजसमीपं नेतुम् इच्छति स्म । किन्तु तावता तस्य मरणं जातम् आकस्मिकतया ।

जयशीलः इदानीम् एकाकी जातः । दुरभ्यासयुक्तानां तरुणानां स्नेहः तस्य जातः । अतः अल्पे एव काले पितुः सम्पत्तिः तेन व्ययीकृता । द्यूते निरतः सन् सः आदिनं द्यूतस्थाने भवति स्म ।

पितुः मरणानन्तरं पञ्चमासाभ्यन्तरे तस्य समग्रा सम्पत्तिः विनष्टा जाता । सः दयनीयां दशां प्राप्नोत् । कदाचित् सः त्रिचतुराणि दिनानि द्यूतस्थाने एव यापितवान् । ततः बहिः आगमने सः लज्जाम् अनुभवति स्म, यतः तस्य श्मश्रूणि प्रवृद्धानि आसन्, वस्त्राणि च मलिनानि आसन् ।

देवशर्मा नाम तदीयः सुहृत् सहानुभूतिं दर्शयन् तम् अवदत् - ''जयशील ! का एषा दुर्दशा भवतः ? श्रेष्ठे कुले जातः भवान् । अपारा सम्पत्तिः अपि आसीत् भवतः । किन्तु सा पूर्णतः विनष्टा अद्य । एषा दुरवस्था स्वयं स्वागतीकृता भवता । द्यूतं मानवम् अधोगतिं प्रापयति । दुर्गतिगर्ते पतितः मानवः उन्नतिं साधयितुं सर्वथा न शक्नोति । भवान् तु सुशिक्षितः । अतीतानां दिनानां विषये अधिकचिन्तनम् अकृत्वा विवेकेन व्यवहरतु ।



स्वकीयं जीवनं स्वयं परिष्कर्तुम् अपेक्षितं सामर्थ्यं भवति अस्ति एव'' इति ।

एतत् श्रुत्वा जयशीलः क्षणकालं मौनेन आसीत् । ततः सः अवदत् - ''मित्र ! योग्यरीत्या स्मारितं भवता । मदीयं जीवनं कथं परिष्करणीयम् इति मया चिन्तनीयम्'' इति ।

देवशर्मा पुनः किञ्चित् वक्तुं यावत् उद्युक्तः तावता द्यूतगृहात् बहिः कश्चन कोलाहलः श्रुतः । राज्ञः अश्वदलस्य नायकः कृपाणजित् चतुर्भिः सैनिकैः सह द्यूतगृहं प्रविश्य तत्रत्यान् सर्वान् जनान् एकैकशः कशया प्रहर्तुम् उद्युक्तः अभवत् ।

जयशीलः एतत् अन्याय्यं सोढुं न शक्तः । सः विनयेन अवदत् - ''किमर्थम् एवं क्रियते भवता । अन्याय्यम् एतत् । अधर्मः एषः'' इति ।

''द्यूतरतेन भवता न्याय्यान्याय्योपदेशः क्रियते मम ! अहो विचित्रम् । भवतः हितोपदेशः किं श्रोतव्यः मया ?'' इति वदन् कृपाणजित् जयशीलम् अपि कशया ताडितवान् ।

कशाप्रहारात् क्रुद्धः जयशीलः एकं दण्डं गृहीत्वा कृपाणजितं शिरसि प्रहृतवान् । एतस्मात् नितरां क्रुद्धः कृपाणजित् स्वस्य खड्गं कोषात् आकृष्टवान् । किन्तु तावता जयशीलः तं कटौ पादेन सम्यक् प्रहृतवान् । कृपाणजित् वेदनया क्रन्दनं कृतवान् । जयशीलस्य सम्मुखीकरणं न शक्यम् इति एतावता सः अवगतवान् आसीत् । अतः सः अश्वम् आरुह्य ततः पलायनं कर्तुम् उद्युक्तः । किन्तु जयशीलः तूष्णीं न अतिष्ठत् । सः अपि बलात् उत्कूर्दनं कृत्वा अश्वस्य पृष्ठे उपविष्टवान् । सः एकेन हस्तेन अश्वस्य खलीनं गृहीत्वा अपरेण हस्तेन कृपाणजितः केशान् गृहीतवान् । जानुकूर्परादिभिः अङ्गैः तं बहुधा अपीडयत् च । अश्वः तु स्वस्य नित्यप्रवृत्तेः अनुगुणं धावन् राजभवनस्य पुरतः गत्वा अतिष्ठत् ।

तस्मिन् समये राजा प्रासादस्य उपरि स्थित्वा मन्त्रिणा सह समालोचनं कुर्वन् आसीत् । कृपाणजिज्जयशीलयोः कलहः तेन दृष्टः । ''तौ वराकौ अत्र आनयतु तावत्'' इति एकं भटम् आज्ञापितवान् सः ।

भटः तौ राज्ञः पुरतः नीतवान् । राजा स्वस्य अश्वदलनायकम् अभिज्ञाय - ''भवान् अश्वदलनायकः खलु ? अश्वस्य उपरि उपविश्य किं तत् शौर्यं प्रदर्श्यते स्म भवता ?'' इति क्रोधेन अपृच्छत् ।

कृपाणजित् विनयेन प्रवृत्तं सर्वम् अवदत् । सर्वं श्रुत्वा राजा महता क्रोधेन - ''भीरुता-कारणतः, अन्याय्यव्यवहारस्य कारणतः च समग्रसेनायाः देशस्य च अपमाननं कृतं भवता । अतः एतस्मिन् क्षणे एव भवन्तम् एतस्मात् देशात् बहिष्कृतवान् अस्मि । खड्गम् अत्रैव स्थापयित्वा इतः निर्गच्छतु तावत्'' इति आज्ञापयत् ।

कृपाणजित् खड्गं भूमौ स्थापयित्वा लज्जया शिरः अवनमय्य ततः निर्गतवान् । तदनन्तरं राजा जयशीलं तीक्ष्णदृष्ट्या पश्यन् - ''अये द्यूतासक्त । मरणदण्डनं विधीयते भवतः । किमपि वक्तव्यम् अस्ति चेत् वदतु तावत्'' इति ।



जयशीलः नितरां निराशः जातः आसीत् । वक्तव्यं किमपि न आसीत् अपि । अतः सः निराशतामिश्रितेन स्वरेण अवदत् - ''महाराज ! भवता मम मरणदण्डनं विहितम् अस्ति । एवं स्थिते किमपि कथयामि चेदपि किं प्रयोजनम् ?'' इति ।

''भोः, किं भवतः प्राणापायभयं किञ्चिदपि नास्ति ?'' इति राजा आश्चर्येण अपृच्छत् ।

''दारिद्र्यभयग्रस्तः जनः मरणभयात् कदापि न बिभेति महाराज !'' इति अवदत् जयशीलः ।

तदा मन्त्री अवदत् - ''एषः दिवङ्गतस्य कुलशेखरस्य एकमात्रपुत्रः । कुलशेखरः अस्माकम् आस्थाने कार्यं करोति स्म । अतः एषः दयाम् अर्हति'' इति ।

''अस्तु तावत् । मरणदण्डनं निराक्रियते देशात् निष्कासनरूपः दण्डः विधीयते मया'' इति अवदत् राजा ।

राजानं नमस्कृत्य ततः निर्गच्छन् आसीत् जयशीलः । तावता राजा पुनः अवदत् - ''अये, एतं खड्गं नयतु । सप्ताहाभ्यन्तरे मम राज्यात् निर्गन्तव्यं भवता । स्मरतु एतत्'' इति ।

जयशीलः झटिति एव नगरात् निर्गतवान् । अरण्यमार्गे सः गमनम् अनुवर्तितवान् । अरण्यस्थानि फलानि खादन् अन्यदेशस्य राजधानीसमीपं गतवान् ।

सः तां रात्रिं यापयितुं कस्यचित् वटवृक्षस्य अधः शयनं कृतवान् । अल्पे एव काले तेन गाढनिद्रा प्राप्ता । मध्यरात्रे शृगालानां ध्वनितः तस्य जागरणं जातम् । अनतिदूरे प्रकाशरेखाः तेन दृष्टाः । धूमः अपि दृष्टः । सः आश्चर्येण एतत्सर्वं यदा पश्यन् आसीत् तदा एव -



''रक्षन्तु, मां रक्षन्तु । महाकालः मां गलितुम् आगच्छन् अस्ति'' इत्येषः आर्तनादः तेन श्रुतः ।

जयशीलः उत्थाय कोषात् खड्गम् आकृष्य हस्तेन गृहीत्वा स्थितवान् । यत्र आर्तनादः श्रुतः तस्यां दिशि सः धावितवान् । तच्च किञ्चन श्मशानम् । त्रयः शवाः ज्वलन्ति स्म तत्र । कृष्णवर्णीयं वस्त्रं धृतवान् कश्चित् तेन दृष्टः तत्र । तस्य केशाः विकीर्णाः आसन् । सः आर्तनादं कुर्वन् धावति स्म । श्वेतवस्त्रं धृतवान् अपरः तम् अनुसरति स्म ।

''अये तिष्ठतु ! महाकालस्य सेवकं कालकालं दृष्ट्वा एव एवं भीतिम् अनुभवन् भवान् किमर्थं महाकालस्य आह्वानं कृतवान् ?'' इति सः वदति स्म ।

जयशीलः तस्य कालकालस्य गमनं निवारयन् - ''अयि भोः ! भीरुं कञ्चित् अनुसृत्य गत्वा मारणार्थं प्रयत्नः न युक्तः । तिष्ठतु तावत् । अलं तस्य पीडनेन'' इति कठोरस्वरेण अवदत् ।

''भवतः साहसबुद्धिः अपूर्वा । मम वास्तविकं रूपं यदि भवान् पश्येत् तर्हि मूर्च्छितः भवेत्'' इति वदन् सः स्वस्य श्वेतवस्त्रम् अपनीय क्षिप्तवान् ।

कालकालस्य रूपं नितरां घोरम् आसीत् । तस्य समग्रं शरीरम् कृष्णवर्णीयम् आसीत् । नेत्रे च अग्निगोलके इव आस्ताम् । तस्य मुखात् अग्निज्वालाः निर्गच्छन्ति स्म । घोरं गर्जनं कृतवान् सः ।

जयशीलः तस्य रूपस्य दर्शनात् क्षणकालं दिग्भ्रान्तः । अनन्तरं सः आत्मनि धैर्यं प्रपूर्य खड्गं कालकालस्य उरोदेशं लक्ष्यीकृत्य गृहीत्वा - ''अये दुष्ट ! भवतः एषः विकृताकारः मयि भीतिं जनयितुं नार्हति । भीत्या पलायमानं कञ्चित् अनुसृत्य धावन् तस्य मारणं कर्तुम् उद्यतः भवान् अपि कश्चन भीरुः एव'' इति अवदत् ।

तदा कालकालः जयशीलं पश्यन् - ''भोः, भवतः धैर्यं प्रशंसार्हम् अस्ति । महाशक्तिशालिनः एव अमानुषशक्तीः स्वाधीनीकर्तुम् अर्हन्ति । मम आह्वानं कृतवान् अयं सिद्धसाधकः कश्चन अल्पसत्त्वः । एतादृशस्य मारणम् एव युक्तम्'' इति उक्त्वा अग्रे गन्तुम् उद्युक्तः ।

जयशीलः तस्य उरसः पुरतः खड्गं गृहीत्वा तं गमनात् निवारयन् सिद्धसाधकस्य अन्वेषणार्थं इतस्ततः दृष्टिं प्रसारितवान् । तावता कालकालः जयशीलस्य खड्गम्

अपसारितवान् आसीत् ।

जयशीलः पराजयम् अङ्गीकर्तुं न सिद्धः । सः कालकालस्य कण्ठं लक्ष्यीकृत्य स्वस्य खड्गं क्षिप्तवान् । एतस्मात् कालकालस्य मुण्डं रुण्डात् पृथग्भूय भूमौ अपतत् । तत् किञ्चित् अग्रे गत्वा अट्टहासं कुर्वत् अवदत् - ''जयशील ! मम रक्तेन भवतः खड्गं सिक्तं जातम् । एतस्मात् सिद्धं यत् भवान् महावीरः इति । वीरवर ! भवतः खड्गं महिमशालि इत्यत्र नास्त्येव सन्देहः । जयोऽस्तु भवतः । यत् भवान् साधयितुम् इच्छति तत् निष्कण्टकं सिद्धं भवतु'' इति ।

जयशीलः आश्चर्येण तस्य शिरसः वचनं श्रुतवान् । ततः तस्य मुण्डस्य समीपं गत्वा खड्गाग्रेण तत् इतस्ततः अचालयत् । तस्मात् तस्य निर्जीवत्वं सिद्धं जातम् । मृतः कालकालः तु अतिबलशाली एव आसीत् । तस्य कण्ठे कर्णयोः च सुवर्णाभरणानि आसन् । जयशीलः परीक्षादृष्ट्या एतत्सर्वं दृष्टवान् ।

ततः सः खड्गं कोषे संस्थाप्य कृष्णवस्त्रधारिणः अन्वेषणार्थम् उद्युक्तः । समीपे कुत्रापि कृष्णवस्त्रधारी न दृष्टः तेन । 'कुत्र गतवान् स्यात् सः ? भयकारणतः सः वृक्षाणां मध्ये कुत्रापि मूर्च्छां प्राप्य पतितवान् स्यात् अपि' इत्येवं चिन्तयन् जयशीलः वटवृक्षस्य समीपम् एव गतवान् ।

तस्य आगमनस्य कारणतः वटवृक्षस्थाः उलूकाः भीतिसूचकं ध्वनिं कृतवन्तः । दूरतः शृगालानां रवः अपि श्रूयते स्म । महती पिपासा अपि तं बाधते स्म । 'इतःपरम् अत्र



शयनम् असम्भवम् । रात्रेः तृतीयः यामः अपि समाप्तप्रायः । समीपे सरोवरं किमपि स्यादेव । तत्र गत्वा पिपासाम् आदौ निवारयिष्यामि । ततः स्नानं कृत्वा नगरं प्रवेक्ष्यामि । मम वस्त्राणि छिन्नानि मलिनानि च सन्ति । तथापि मम कटौ स्थितं खड्गं दृष्ट्वा, खड्गकोषे चित्रितं चित्रादिकं दृष्ट्वा च जनाः जानीयुः यत् अहं कुलीनपरिवारसम्बद्धः इति । यदि कोऽपि पृच्छेत् तर्हि वदिष्यामि यत् अरण्ये कश्चन सिंहः मया सम्मुखीकृतः, मारितः च इति' इति चिन्तयित्वा जयशीलः ततः निर्गतवान् ।

श्मशानम् अतिक्रम्य यदा अग्रे गतं तदा एकः कुटीरः दृष्टः तेन । तस्य अन्तः प्रकाशः दृश्यते स्म । गृहजनान् पृष्ट्वा जलं प्राप्तुम् इच्छन् सः उच्चैः अवदत् - ''अयि भोः ! अहं कश्चन यात्रिकः अस्मि । किं पातुं जलं



प्राप्येत अत्र ?'' इति ।

अनन्तरक्षणे द्वारम् उद्घाटितम् । काचित् वृद्धा दीपं गृहीत्वा बहिः आगत्य अवदत् - ''वत्स ! अन्धकारप्रसारः यदा आरब्धः तदा एव काचित् धर्मशाला आश्रयणीया आसीत् खलु भवता ? एतस्मिन् मध्यरात्रे किमर्थं प्रयाणं क्रियते भवता ? अन्तः आगच्छतु तावत् । जलं पिबतु'' इति ।

जयशीलः अन्तः गतवान् । दीपप्रकाशस्य साहाय्येन तस्य मुखं परिशील्य वृद्धा आश्चर्यं प्रकटयन्ती तम् अवदत् - ''तीर्थयात्रार्थम् उद्युक्तः कश्चन वृद्धः स्यात् भवान् इति मया चिन्तितम् आसीत् । किन्तु भवान् तु अल्पवयस्कः तरुणः । कटौ खड्गं बद्ध्वा एतस्मिन् अरण्ये कोऽयं सञ्चारः भवतः ?'' इति ।

जयशीलः मौनेन जलं पीत्वा वृद्धाम् अवदत् - ''जलदानात् मम प्राणाः रक्षिताः भवत्या । दर्शनात् भासते यत् गृहे अन्यः कोऽपि नास्ति इति'' इति ।

''आं वत्स ! गृहे अन्यः कोऽपि नास्ति । अहं तु अनपत्या । गते वर्षे मम पतिः दिवं गतः । राजास्थाने कार्यं करोति स्म सः । तस्य मरणस्य अनन्तरं तदीयस्य वेतनस्य तृतीयः भागः वृद्धायाः मम उदरपोषणार्थं दीयते । तद्बलात् एव जीवामि अहम्'' इति अवदत् वृद्धा ।

''अम्ब ! ऐदम्प्राथम्येन एतं प्रदेशम् आगतः अस्मि अहम् । समीपे स्थितस्य नगरस्य नाम किम् ? राज्ञश्च नाम किम् ?'' इति अपृच्छत् जयशीलः ।

वृद्धा दीर्घं निश्श्वस्य अवदत् - ''नगरस्य नाम हिरण्यपुरम् इति । राज्ञः नाम कनकाक्षः इति । सः धर्मात्मा, प्रजाहितचिन्तकः च । प्रजानां हितम् एव तस्य आद्यं कर्तव्यम् । किन्तु मासात् पूर्वं राजकुमारी युवराजः च केनचित् अपहृतौ । तस्मात् दिनात् राजा चिन्तासागरे मग्नः । आधिग्रस्तः जातः अस्ति सः'' इति ।

जयशीलः चिन्ताक्रान्तः जातः । 'एतादृशं राजानम् उद्योगं याचितुं न अर्हामि अहम् । अतः अत्र उद्योगप्राप्तिविचारस्य सर्वथा परित्यागः एव वरम्' इति चिन्तयित्वा सः राज्ञः कष्टस्य समग्रविवरणस्य ज्ञाने कुतूहली जातः ।

''अम्ब ! कोऽपि शत्रुराजः एतत् कार्यं कृतवान् स्यात् खलु ? उत्तमराजस्य उत्कर्षं सोढुम् असमर्थाः केचन राजानः कदाचित्

एतादृशं कार्यं कुर्वन्ति'' इति वृद्धाम् अवदत् जयशीलः ।

''यदि तथा अभविष्यत् तर्हि प्रायः विशेषक्लेशः न अभविष्यत् । शत्रूणां जये राजा कनकाक्षः समर्थः आसीत् एव । अतः सः शत्रून् संहृत्य पुत्रीं पुत्रं च लीलया अमोचयिष्यत् । किन्तु तथा न जातम् । जनाः चिन्तयन्ति यत् तयोः अपहरणकर्ता कोऽपि राक्षसः यक्षः वा स्यात् इति'' इति अवदत् वृद्धा ।

एतत्सम्बन्धे इतोऽपि अधिकं विवरणं ज्ञातुम् इच्छति स्म जयशीलः । किन्तु तावता गृहात् बहिः द्वित्रजनानां कश्चन कोलाहलध्वनिः श्रुतः ।

कश्चन जनः रुदन् वदति स्म - ''भोः महाशय ! श्मशाने मम पितुः शिरः कर्तितवान् जनः इतः एव आगतवान् अस्ति । पश्यतु, मध्यरात्रे अपि एतस्याः वृद्धायाः गृहे कश्चन दीपः ज्वलति । अतः सः दुष्टः इतः एव आगतः इति तु स्पष्टम् । तां वृद्धां पृच्छतु कृपया'' इति ।

''भवान् तु श्मशानरक्षकः, असत्यकथकः च । एषः महावीरः यस्य शिरः कर्तितवान् तस्य नाम कालकालः इति । सः आत्मानं भूतप्रेतानां नायकं वदति स्म । एतत्सर्वं विवरणम् अहं सम्यक् जानामि । अतः भवान् स्वस्य असम्बद्धप्रलपनं स्थगयतु'' इति कोपेन उक्तवान् अपरः ।

तौ उभौ अपि निवारयन् तृतीयः उक्तवान् - ''भवन्तौ उभौ अपि तूष्णीं भवताम् । मृतः श्मशानरक्षकः कथम् उज्जीवितः अभवत् इति ज्ञातुं मन्त्री मां प्रेषितवान् अस्ति । अहम् अस्मि नगररक्षकः'' इति ।

जयशीलः तेषां वचनानि श्रुतवान् आसीत् । सः वृद्धाम् अवदत् - ''अम्ब ! मां ग्रहीतुं नगररक्षकः, केचन सैनिकाः च आगताः सन्ति इति भाति । अतः मम अत्र स्थितिः सर्वथा न युक्ता । अहं पृष्ठद्वारतः इतः निर्गमिष्यामि'' इति ।

वृद्धा यावत् उत्तरं वक्तुम् उद्युक्ता तावता नगररक्षकः द्वारं बलेन ताडयन् - ''कः अस्ति अन्तः ? द्वारम् उद्घाट्यताम्'' इति उच्चस्वरेण अवदत् ।

- *(अनुवर्तते)*



# दलनायकः

दुर्गापुरस्य प्रतिवेशिराज्यस्य च मध्ये युद्धं प्रवर्तते स्म । पर्वतमार्गे स्थिता काचित् शिला दुर्गापुरस्य सैनिकानां गमनागमने विघ्नं करोति स्म । दुर्गापुरस्य केचन सैनिकाः तस्याः अपसारणार्थं उद्युक्ताः आसन् । ते स्वस्य समग्रबलस्य उपयोगं कृत्वा तस्याः शिलायाः अपसारणे प्रयत्नं कुर्वन्तः आसन् । तथापि साफल्यं तु न प्राप्तं तैः । ततः अनतिदूरे स्थितः दलनायकः तान् कोपेन पश्यन् अवदत् - "भवन्तः एतावन्तः सन्ति । तथापि एकां शिलां मार्गतः अपसारयितुं न शक्ताः । राजा एतेन एव मार्गेण अचिरात् एव आगच्छेत् । ततः पूर्वम् एतत् कार्यं समाप्तं स्यात् । हुं, त्वर्यताम्" इति ।

तावता कश्चन अश्वारोही तत्र आगतः । गमनं स्थगयित्वा सः प्रवर्तमानं विलोक्य दलनायकम् अवदत् - "एतैः दशभिः सैनिकैः सह भवान् अपि हस्तं यदि प्रसारितवान् स्यात् तर्हि कार्यं सिद्धम् अभविष्यत् प्रायः । किम् एतद्विषये न चिन्तितं भवता ?" इति ।

"अहं तु दलनायकः अस्मि" इति गर्वमिश्रितस्वरेण अवदत् दलनायकः ।

एतत् श्रुत्वा अश्वारोही अश्वात् अवतीर्णवान् । सैनिकानां समीपं गत्वा तेषु उत्साहं पूरयन् - "अहम् एकादशः उपस्थितः अस्मि । सर्वे मिलित्वा समग्रेण बलेन एतां शिलाम् अपसारयाम" इति अवदत् ।

अल्पे एव काले शिला अपसारिता जाता । अश्वारोही उत्साहेन अश्वम् आरुह्य दलनायकम् अवदत् - "पुनः कदाचित् एवं मार्गतः शिलायाः अपसारणं यदि आपतेत् तर्हि सेनापतये वीरवर्मणे वार्ता प्रेषयतु" इति । एतावत् उक्त्वा सः वेगेन अश्वं चालयन् ततः निर्गतवान् ।

एतत् श्रुत्वा दलनायकः सैनिकाः च ज्ञातवन्तः यत् सः अश्वारोही दुर्गापुरस्य सेनापतिः एव, न अन्यः इति ।



वेताल-
कथा

# राज्ञः वानप्रस्थः

राजा त्रिविक्रमः पूर्ववत् पुनः वृक्षस्य समीपं गत्वा वृक्षात् शवम् अवतार्य स्कन्धे संस्थाप्य श्मशानदिशि प्रस्थितः । तदा शवान्तर्गतः वेतालः अवदत् - ''राजन् ! एतत् श्मशानं भूतप्रेतादीनाम् आवासभूमिः । अत्र स्थितिः अपायकरी । तथापि अत्रैव सञ्चारे उत्सुकस्य भवतः एतत् कार्यं दृष्ट्वा मम मनसि सन्देहः जायते - 'भवतः लक्ष्यं किं स्यात् ?' इति । भवतः सर्वोऽपि व्यवहारः मौर्ख्योपेतम् इव भासते । कदाचित् सर्वशास्त्रपारङ्गतस्यापि मानवस्य बुद्धिः मलिना भवति । तदा सः 'अहं किं कुर्वन् अस्मि ? मया अग्रे किं करणीयम् ?' इति ज्ञातुं न प्रभवति । उदाहरणार्थं सत्यकीर्तिनामकस्य राज्ञः कथां श्रावयामि । मार्गायासपरिहारार्थं तस्य कथां श्रद्धया शृणोतु'' इति ।



ततः वेतालः कथाम् आरब्धवान् -

पूर्वं सत्यकीर्तिनामकः राजा वरालदेशं पालयति स्म । सः उत्तमः राजा । बुद्धिमान् सः योग्यरीत्या प्रजानां परिपालनं करोति स्म । प्रजानामपि तस्य विषये महती प्रीतिः आसीत् । किन्तु काले अतीते, वयःकारणात् शासन-व्यवहारे राज्ञः आसक्तिः न्यूना अभवत् । तस्य शरीरं विश्रान्तिसुखम् इच्छति स्म । अतः सः राज्यभारात् मुक्तिं प्राप्तुम् इष्टवान् ।

सत्यकीर्तेः चत्वारः पुत्राः आसन् । ते चत्वारः अपि बुद्धिमन्तः पण्डिताश्च । अतः राजा मन्त्रिभिः सामन्तराजैः च सह मन्त्रयित्वा ज्येष्ठपुत्रं रामभद्रं राजानं कृतवान् ।

ततः तेन स्वमनः ध्याने संलग्नं कर्तुं प्रयत्नः कृतः । किन्तु मनः ध्यानस्थितौ लीनं नाभवत् । तदा राज्ञः चिन्ता आरब्धा - 'किमर्थं मम मनः चञ्चलम् अस्ति ? ध्याने मम मनः स्थिरत्वं कुतः न प्राप्नोति ?' इति । अस्मिन् विषये बहुधा विचिन्त्य राजा निर्णीतवान् यत् संन्यासिनां सङ्गे शेषजीवनं यापयन् अहं मुक्तिमार्गम् अन्विष्यामि इति । एतं विषयं सः बृहस्पतिभट्टनामकं पण्डितम् उक्तवान्, यश्च प्रतिदिनं तस्य सभां प्रति आगच्छति स्म ।

बृहस्पतिभट्टः राज्ञः वचनेन अतीवसन्तुष्टः सन् अवदत् - ''भवता योग्यं चिन्तनं कृतम् । संसारमोहात् मुक्तः भवितुं संन्यासिसङ्गः उचितः श्रेयोदायकश्च मार्गः'' इति ।

तदा राजा अवदत् - ''भवता सत्यमुक्तम् । तथापि आ जन्मना सुखेन तिष्ठताम् एषः मार्गः कठिनः इति भासते । यतः आश्रमस्य नियमाः कठिनाः । तेषां पालनं कष्टकरं स्यात् । आहार-विषये अपि नियन्त्रणम् आवश्यकम् । एतत्सर्वं कर्तुं प्रायः मया न शक्येत इति भाति'' इति ।

एतत् श्रुत्वा बृहस्पतिभट्टः हसन् अवदत् - ''प्रभो, भयं मास्तु । आरम्भे कानिचन दिनानि कष्टं भवेत् । क्रमेण तद्विषये आदरः भवेत् एव । तेन ध्याने मनः अपि संलग्नं भविष्यति । अस्मिन् विषये निश्चयेन साफल्यं प्राप्स्यते इति मम दृढः विश्वासः'' इति ।

तस्य वचनं राज्ञि परिणामम् अजनयत् । तथापि स्वस्मिन् पूर्णः विश्वासः न आसीत् तस्य । अतः तेन उक्तम् - ''अस्माकं राजधान्याः समीपे स्थिते चम्पकवने कार्तिकेयः नाम कश्चन संन्यासी तपसि मग्नः अस्ति । तत्र अहं कानिचन दिनानि स्थास्यामि । तत्र जायमानाः अनुभवाः मयि स्थैर्यं जनयेयुः । अहम् आश्रमे स्थातुं शक्नोमि उत न इत्येतत्

तत्र ज्ञायेत'' इति ।

बृहस्पतिभट्टाय अपि राज्ञः एषः विचारः अरोचत । अतः सः स्वस्य अङ्गीकारम् असूचयत् । ततः राज्ञा आश्रमं गन्तुं सन्नाहः आरब्धः । पितुः एषः क्रमः चतुर्भ्यः अपि पुत्रेभ्यः न अरोचत । ते विरोधं प्रकटितवन्तः ।

तदा राजा तान् सान्त्वयन् अवदत् - ''यदि अहम् तत्र कष्टं सोढुं न शक्नुयां तर्हि अवश्यं प्रतिनिवृत्तः भविष्यामि'' इति । पितुः एतत् वचनं श्रुत्वा ते अङ्गीकारं सुचितवन्तः ।

ततः राजा सत्यकीर्तिः कर्मकरेण कर्मकर्या च सह तत् चम्पकवनं गतः । संन्यासिनः कार्तिकेयस्य आश्रमसमीपे एव राज्ञः निमित्तं पर्णकुटीरस्य निर्माणं कृतम् आसीत् । तस्मिन् शय्या प्रसारिता आसीत् । शय्यायाः पार्श्वे फलानि, नानाविधाहारपदार्थाः चापि आसन् । पर्णकुटीरस्य एकस्मिन् पार्श्वे पूजामन्दिरस्य निर्माणमपि जातम् आसीत् । पूजामन्दिरे एकम् आसनं, रुद्राक्षजपमाला च आसीत् ।

सत्यकीर्तिः एतां सर्वां व्यवस्थां दृष्ट्वा सन्तोषेण तान् सेवकान् अभिनन्दितवान्, यैः च राज्ञः आगमनात् पूर्वमेव एतादृशी व्यवस्था कृता आसीत् । रात्रौ तेन भोजनानन्तरं विश्रान्तिः स्वीकृता । प्रातःकाले एव सः संन्यासिनः दर्शनाय प्रस्थितः । आश्रमं गत्वा सः तत्र कस्यचित् आम्रवृक्षस्य अधः तपोमग्नं संन्यासिनं दृष्टवान् । राजा तस्य तपोभङ्गं कर्तुम् अनिच्छन् अनतिदूरे स्थितायां शिलायाम् उपविष्टवान् । समयः महान् अतीतः । किन्तु संन्यासी तपसः विमुक्तः नाभवत् एव । अतः राजा ततः प्रस्थाय परितः स्थितं प्रकृतिसौन्दर्यं



पश्यन् तस्मिन् एव मग्नः जातः । किञ्चित्-समयानन्तरं 'राजन्' इति सम्बोधनं यदा श्रुतं तदा सः पृष्ठतः दृष्टवान् ।

तस्य पुरतः शान्तः हसन्मुखः संन्यासी कार्तिकेयः स्थितः आसीत् । सत्यकीर्तिः शिरः अवनमय्य तस्मै प्रणामान् समर्पितवान् ।

कार्तिकेयः 'सुखी भव' इति आशिषा अनुगृह्य - ''आगच्छतु, अस्यां शिलायाम् उपविशाव' इति तम् अवदत् । उभौ अपि शिलायाम् उपविष्टौ । तदा कार्तिकेयः हसन् पृष्टवान् - ''भवतः सेवकाः सर्वे गताः किम् ?'' इति ।

अनेन प्रश्नेन लज्जितः राजा मन्दस्वरेण अवदत् - ''पर्णकुटीरे मदर्थं व्यवस्थां सर्वां समाप्य ते राजधानीं गताः । इदानीं मया सह एकः सेवकः, एका सेविका च स्तः । यदा



किम् ?'' इति संन्यासी राजानं पृष्टवान् ।

''स्वामिन् । अस्मिन् वने फलैः पुष्पैश्च युक्ताः वृक्षाः सन्ति । तैः सह औषधगुण-युक्ताः लताः औषधीयसस्यानि च अत्र सन्ति । अहं राजवैद्यं भीष्माचार्यम् आहूय तं पृष्ट्वा अत्र औषधगुणयुक्ताः लताः औषधीयसस्यानि च कियन्ति सन्ति इति ज्ञातुम् इच्छामि । रोग-निरोधकानि औषधानि कर्तुं तं वैद्यं प्रेरयिष्यामि'' इति अवदत् राजा ।

राज्ञः वचनं श्रुत्वा संन्यासी अवदत् - ''राजन् ! भवान् ज्ञानी अस्ति । इदानीं मया यत् श्रुतं तेन ज्ञायते - भवान् सकलशास्त्र-पारङ्गतः अस्ति इति । केवलं नेत्रे निमील्य ध्यानकरणेन, जपेन, तपसा वा मुक्तिः लभ्यते इति भवतः अभिप्रायः किम् ?'' इति ।

सत्यकीर्तिः निर्वचनः अभवत् तत् श्रुत्वा । तदा कार्तिकेयेन उक्तम् - ''राजन् ! भवान् शीघ्रं राजधानीं गच्छतु । सुखेन जीवनं यापयतु । राजा भूत्वा भवतः विचारान् सर्वान् आचरणे आनयतु । अनेन प्रजानां हितं सिद्ध्यति । चम्पकवनस्य विषये ये विचाराः भवति सन्ति ते उत्तमाः'' इति ।

राजा सत्यकीर्तिः तदा किमपि अवदन् संन्यासिनः चरणौ नमस्कृत्य ततः प्रस्थातुम् अनुज्ञां प्राप्य ततः प्रस्थितः । परेद्यवि एव सः राजधानीं प्रतिनिवृत्तः ।

वेतालः एवं कथां समाप्य अवदत् - ''राजन् ! संन्यासी राजानं सत्यकीर्तिं सकल-शास्त्रपारङ्गतम् उक्तवान् । वानप्रस्थविषये, तपसः विषये च ये उपदेशाः तेन दातव्याः आसन् तान् अदत्त्वा एव राजधानीं गन्तुं सूचनां

अहं वानप्रस्थाश्रमं स्वीकरिष्यामि तदा एतौ अपि राजधानीं प्रतिगमिष्यतः । भवान् जानाति एव यत् मम जीवनं सदा सुखमयम् एव आसीत् इति । अतः इदानीम् एतौ अत्र स्तः'' इति ।

एवम् उक्त्वा राजा स्वस्य आगमनकारणं संन्यासिनं विस्तरेण अवदत् । संन्यासी राज्ञः कथनं श्रुत्वा पृष्टवान् - ''तर्हि भवतः अत्र आगमनस्य अनन्तरं महान् समयः अतीतः ! एतावत्पर्यन्तं भवान् अत्र किं कृतवान् ? नीरसता न अनुभूता किम् ?'' इति ।

सत्यकीर्तिः सङ्कोचम् अनुभवन् उक्तवान् - ''सत्यं, किञ्चित् नीरसता अभवत् । किन्तु अहं चम्पकवनं परितः स्थितं परिसरं पश्यन् तां नीरसताम् अपनीतवान् । वनदर्शनसमये मम मनसि अनेके विचाराः उत्पन्नाः'' इति ।

''मया अपि ते विचाराः ज्ञातुं शक्यन्ते

दत्तवान् सः । अहं चिन्तयामि यत् तेन समीचीनतया न व्यवहृतम् इति । संन्यासिनः सर्वसङ्गपरित्यागिनः भवन्ति । आध्यात्मिक-चिन्तनेन साकं ते तपः अपि कुर्वन्ति । अतः एतादृशानां संन्यासिनां मनसि सहजतया एव अहङ्कारः भवति । अत एव तेन संन्यासिना तादृशी सूचना राज्ञे दत्ता । एवं ननु ? राज्ञा अपि विवेकेन न व्यवहृतम् । मार्गदर्शनं कर्तुं, तपः कर्तुं वा अनुज्ञा प्रष्टव्या आसीत् तेन । तत् अकृत्वा संन्यासिनः वचनेन अनन्तरदिने एव राजधानीं प्रस्थितः सः । एषः क्रमः अविवेकयुतः न वा ? कीदृशं वैराग्यं तस्य ? किं सः मूर्खः न ? मम एतेषां सन्देहानाम् उत्तरं जानन् अपि भवान् यदि न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा त्रिविक्रमः उक्तवान् – ''आर्योक्तिः काचित् अस्ति यत् जनतासेवा एव जनार्दनसेवा इति । सत्यकीर्तिः दीर्घकालं यावत् प्रजा-सेवायामेव निरतः आसीत् । किन्तु वार्धक्य-कारणात्, शरीरे जातायाः बलहीनतायाः कारणात् च राज्यभारं वोढुम् असमर्थः सन् सः ततः मुक्तिं प्राप्तुम् इष्टवान् । अत एव तस्य मनसि वानप्रस्थस्य तपसश्च विचारः उत्पन्नः । अनेन मुक्तिः साध्या इति तस्य मनः चिन्तयितुम् उद्युक्तं जातम् । किन्तु तत् ज्ञानं मिथ्या एव । संन्यासी तु एतत् सर्वं जानाति स्म एव । राज्ञः मनः प्रजानां हितमेव इच्छति सर्वदा । अतः एव राजा तपः कर्तुं, उपदेशं प्राप्तुं च यद्यपि आगतः, तथापि चम्पकवने औषधीयसस्यानि, लताः च दृष्टवति तस्मिन् चिन्तनम् आरब्धं यत् एतानि कथं जनोपयोगीनि स्युः इति । स्वसेवानिमित्तं परिचारकद्वयं येन आनीतं तेन आश्रम-जीवनकष्टं सोढुं न शक्यते इति संन्यासी ज्ञातवान् । राज्ञः प्रवृत्तिमपि सः जानाति स्म । अत एव सः राजानं सूचितवान् – 'राजधानीं प्रतिगच्छतु, राज्यभारमेव वहतु' इति । सत्यकीर्तिः संन्यासिनः वचसि स्थितं गूढार्थं ज्ञातवान् । अत एव सः द्वितीयदिने राजधानीं प्रस्थितः । अत्र संन्यासिनः अहङ्कारः, राज्ञः सत्यकीर्तेः अज्ञानं वा सर्वथा नास्ति'' इति ।

राज्ञः मौनभङ्गं कर्तुं समर्थः सन् बेतालः शवेन सह अदृश्यः भूत्वा वृक्षस्य शाखाम् अवलम्बितवान् ।



# भारतम् अवगम्यताम्

## प्रश्नोत्तरम्

बहूनां छात्राणां परीक्षा समाप्ता स्यात् । केचन विद्यालयस्य विरामस्य आरम्भस्य प्रतीक्षां कुर्वन्तः स्युः । पुनः केचन प्रवासयोजनाम् अपि चिन्तयन्तः स्युः । अतः एतस्मिन् मासे प्रश्नाः कमपि विषयविशेषम् अधिकृत्य न भवन्ति,प्रत्युत मिश्रविषयकाः भवन्ति । उत्तरं दातुं प्रयतन्तां तावत् -

१. मिल्कासिंह्नः ४०० मीटर् धावनरूपायां ओलम्पिक्स्पर्धायां विजयं प्राप्तवान् । कस्मिन् वर्षे सा स्पर्धा प्रवृत्ता ?
२. १९०० तमे वर्षे इदा स्कुडार् दक्षिणभारतीये लघुनगरे कस्मिंश्चित् लघुप्रकोष्ठे एकं चिकित्सालयम् आरभत । अद्य सः विश्वविख्याता संस्था जाता अस्ति । तस्याः नाम किम् ?
३. गते वर्षे वि.एस्.नयपालः साहित्यक्षेत्रीयां नोबेल्प्रशस्तिं प्राप्तवान् । १९५१तमे वर्षे सः बुकर्प्रशस्तिम् अपि प्राप्तवान् आसीत् । तदीयानि कानि पुस्तकानि प्रशस्तिहेतुकानि आसन् ?
४. १९३२तमे वर्षे भारते प्रथमं वाणिज्यविमानं सञ्चारस्य आरम्भम् अकरोत्, येन च जे.आर्.डि.टाटावर्यः मुम्बयीं गतवान् । तत् विमानं कुतः प्रस्थानम् अकरोत् ?
५. नासिकम् अपि अविहाय महाकुम्भमेला चतुर्षु स्थलेषु प्रचलति कस्याश्चित् नद्या तीरे । सा नदी का ?
६. विश्वसंस्थायाः सामान्याधिवेशने १९७७तमे वर्षे ऐदम्प्राथम्येन कः हिन्दीभाषया भाषणं कृतवान् ?
७. इदानीं व्याघ्रः अस्माकं राष्ट्रियपशुः । पूर्वं कश्चन अपरः तत् स्थानं विभूषितवान् आसीत् । सः कः ?
८. १९८२ तमे वर्षे भारतेन अण्टार्क्टिकाप्रदेशे स्वस्य निवेशनं संस्थापितम् । तस्य नाम किम् ?
९. मलेरियारोगस्य कारणीभूतस्य अणुजीविनः संशोधनावसरे रोनाल्डरोस् भारतस्य कस्मिंश्चित् चिकित्सालये कार्यं करोति स्म । तस्य नाम किम् ?
१०. गतेषु २०० वर्षेषु १९९१ तमे वर्षे अग्निपर्वतः कश्चन अग्निरसम् उदवमत् । एषा घटना कुत्र प्रवृत्ता ?

*(उत्तराणि अग्रिमे मासे)*

### *'मार्च्'मासस्य प्रश्ननानाम् उत्तराणि*

*१. मुनयः ।*
*२. पार्वती, गिरिजा ।*
*३. अहल्या । शापदाता ऋषिः तस्याः पतिः गौतमः । सः महात्मा च रामः ।*
*४. ऐरावतः इति ।*
*५. उग्रसेनः ।*
*६. कार्कोटकः ।*
*७. गान्धारी । तस्याः पत्युः नाम धृतराष्ट्रः इति । सः हस्तिनापुरस्य अधीशः ।*
*८. दण्डकारण्ये ।*

# भारत-गौरव-गाथा

महासंस्कृत्याः स्थूलदर्शनम्, प्रतियुगं सत्यान्वेषणार्थं कृताः विशेषयत्नाः

## २७. शिक्षणस्य अनुपमः क्रमः



"तात ! बृहत्कथा एव जगतः प्रथमः कथासङ्ग्रहः इति भवता उक्तं खलु ?" इति देवनाथवर्यं पृष्टवती चमेली ।

"आं, वत्से" इति अवदत् देवनाथवर्यः ।

चमेली झटिति गत्वा एकां साप्ताहिकपत्रिकाम् आनीय उद्घाट्य देवनाथवर्याय एकं लेखं दर्शितवती । स च लेखः पञ्चतन्त्रम् अधिकृत्य लिखितः आसीत् । तत्र लेखकः लिखितवान् आसीत् यत् पञ्चतन्त्रम् एव भारतस्य प्रथमः कथासङ्ग्रहः इति ।

"यदि बृहत्कथा जगतः प्रथमः कथासङ्ग्रहः तर्हि सा एव भारतस्यापि प्रथमः कथासङ्ग्रहः स्यादेव खलु ? यदि पञ्चतन्त्रं भारतस्य प्रथमः कथासङ्ग्रहः स्यात् तर्हि तत् बृहत्कथातः पूर्वतनं स्यात् । तदा च प्रपञ्चस्य प्रथमः कथासङ्ग्रहः पञ्चतन्त्रम् एव स्यात्, न तु बृहत्कथा" इति युक्तिम् उपस्थापितवती चमेली ।

"एतस्य लेखकस्य कथनं भागशः सत्यं, भागशः मिथ्या च । गुणाढ्यस्य बृहत्कथा तु पञ्चतन्त्रतः अपि पुरातनी एव इत्यत्र नास्ति संशयः । किन्तु सः च ग्रन्थः न उपलभ्यते

*अनुवर्तमाना कथामाला*



खलु ? बृहत्कथायाः भागं कञ्चित् अवलम्ब्य रचितः अस्ति कथासरित्सागरः एकादशे शतके । पञ्चतन्त्रं च तृतीये शतके ततः पूर्वं वा रचितं स्यात् । एवं च उपलभ्यमानेषु पञ्चतन्त्रम् एव प्राचीनम्'' – देवनाथवर्यः विवृतवान् ।

''तात ! चायं पीत्वा भवान् कथाम् अनुवर्तयितुम् अर्हति । सन्दीपः चायम् आनयन् अस्ति'' इति उक्तवती जयश्रीः ।

''यथानुकूल्यम् आनयतु नाम सः । न काऽपि त्वरा मम'' इति उक्त्वा देवनाथवर्यः कथनम् अनुवर्तितवान् – ''कथासरित्सागर-पञ्चतन्त्रयोः कतमं प्रथमम् इति विवादे नास्ति सारः इति भाति मम । उभयोरपि प्राथम्ये उक्ते न काऽपि हानिः । कथासरित्सागरः उपाख्यानानां सङ्ग्रहः, पञ्चतन्त्रं च कथानां सङ्ग्रहः । पञ्चतन्त्रस्य रचयिता विष्णुशर्मा । सोऽपि महापुरुषः एव । उपस्थितां समस्यां धैर्येण सम्मुखीकृत्य यशस्वी जातः सः''

''बृहत्कथारचनासम्बद्धा कथा श्राविता आसीत् भवता । पञ्चतन्त्रस्य पृष्ठभूमिकायाम् अपि स्यादेव खलु काचित् कथा ?'' इति वदन् प्रकोष्ठं प्रविश्य देवनाथवर्याय चायं दत्तवान् सन्दीपः ।

''अस्ति एव'' इति वदन् देवनाथवर्यः चायं पीत्वा कथायाः पृष्ठभूमिकायाः विवरणम् आरब्धवान् –

पूर्वं महिलारोप्यं नाम राज्यम् आसीत् । तस्य राजा अमरशक्तिः । सः न्याय्येन मार्गेण राज्यं परिपालयन् सुखेन जीवति स्म । किन्तु तस्य एका चिन्ता अपि आसीत् । सा च पुत्राणां विषये । तस्य त्रयः पुत्राः आसन् । ते अनुत्तमाः तु न, किन्तु दौर्बल्यग्रस्ताः । तेषां दौर्बल्यं नाम ते अध्ययने सर्वथा अनासक्ताः आसन् । कस्यचिदपि अध्यापकस्य दृष्टिपातम् अपि न सहन्ते स्म ते । तेषु विवेकं जागरयितुं बहुधा प्रयत्नं कृत्वाऽपि विफलः जातः आसीत् राजा ।

तेषु कश्चित् सिंहासने प्रतिष्ठापनीयः एव आसीत् राज्ञा । यः विद्याभ्यासम् एव निराकृतवान् तादृशाय राज्यनिर्वहणभारं कथं वा दातुम् अर्हेत् राजा ? अतः चिन्ताक्रान्तः राजा पण्डितान् चिन्तकान् च आहूय स्वस्य समस्यां तेषां पुरतः उपस्थापितवान् । ''मम पुत्राः कथं बोधनीयाः इत्यत्र भवन्तः कमपि उपायं दर्शयन्तु कृपया'' इति तान् प्रार्थितवान् च ।

पण्डितैः विविधाः उपायाः सूचिताः । किन्तु

तेषु कोऽपि उपायः राज्ञे न अरोचत, यतः ते व्यावहारिकाः न आसन् । कमपि उपायम् अप्राप्य चिन्ताक्रान्ततया उपविष्टं राजानं कश्चित् अवदत् - ''विष्णुशर्मा नाम पण्डितः अस्ति । सः समस्यानां निवारणे नितरां समर्थः । तस्य मार्गदर्शनं प्राप्तं चेत् समस्यापरिहारः भवेत्'' इति ।

राज्ञः सूचनायाः अनुगुणं विष्णुशर्मा आस्थानम् आगतवान् । तस्य पाण्डित्यं बुद्धिमत्तां च दृष्ट्वा राजा नितरां सन्तुष्टः । सः त्रयाणां राजकुमाराणाम् अपि शिक्षणम् अङ्गीकृतवान् । राजा प्रभूतस्य धनस्य दानं कर्तुम् इष्टवान् ।

किन्तु विष्णुशर्मा धनस्य स्वीकारं निराकुर्वन् उक्तवान् - ''अहं विद्यां विक्रेतुं न इच्छामि । अन्यच्च अहं वृद्धः । धनेन किं मम ?'' इति ।

विष्णुशर्मा तेषां त्रयाणां राजकुमाराणां मैत्रीं सम्पाद्य तान् एकान्तस्थलं प्रति नीतवान् । प्रासादात् अनतिदूरे वटवृक्षस्य च्छायायाम् उपविष्टवन्तः ते । ततः विष्णुशर्मा कथनम् आरब्धवान् -''अस्ति गोदावर्याः तीरे कश्चन शाल्मलीवृक्षः । तत्र नानाभागेभ्यः आगताः पक्षिणः वसन्ति स्म ।.....''

ततः सः सज्जन-दुर्जनानां, विश्वास-वञ्चनयोः, चतुरतामूर्खतयोः, भाग्य-दौर्भाग्ययोः, अपराधदण्डनयोः, एतादृशानाम् अन्यविषयाणां च विषये अनेककथाः उक्तवान् । ताः कथाः उपकथाभिः युक्ताः भवन्ति स्म । एका कथा अपरकथायाः कारणम् भवति स्म । एषा प्राचीनभारतीय-



कथाकथनपरम्परा एव अग्रे 'अरेबियन् नैट्स्' कथानाम् उत्पत्तेः कारणं जाता ।

यावत् विष्णुशर्मणः कथासरणिः समाप्ता तावता राजकुमाराः विवेकिनः जाताः आसन् । कथाच्छलेन तैः विद्या अधिगृहीता आसीत् । राज्यशास्त्रं, मनश्शास्त्रं, समाजशास्त्रम्, अर्थशास्त्रम् इत्यादीनि राजपुत्रैः यानि यानि ज्ञातव्यानि आसन् तानि सर्वाणि ज्ञातानि आसन् त्रिभिः अपि राजपुत्रैः । 'पञ्चतन्त्र'पदस्य अर्थः पञ्चभिः उपायप्रकारैः युक्तः ग्रन्थः इति ।''

''तात ! किं भवान् पञ्चतन्त्रस्य एकां वा कथाम् अस्मान् श्रावयेत् ?'' इति पृष्टवती चमेली ।

''वत्से ! पञ्चतन्त्रस्य बह्व्यः कथाः ज्ञायन्ते भवत्या, अन्यैः च । शयानस्य पुरुषस्य रक्षणे उद्युक्तः कपिः मक्षिकां खड्गेन मारयन् स्वामिनम्

एव मारितवान् यत् तां कथां किं न जानाति भवती ? दण्डसाहाय्येन उभाभ्यां हंसाभ्यां नीयमानः कूर्मः जनानां वचनं श्रुत्वा किमपि वक्तुम् उद्युक्तः सन् मुखोद्घाटनतः मरणं प्राप्नोत् यत् सा कथा किं न ज्ञायते ? त्रयः शिष्याः सिंहस्य उज्जीवनं मन्त्रबलेन कृत्वा ततः आत्मनः रक्षणम् अजानन्तः मरणं प्राप्तवन्तः यत् तां कथां किं न जानाति भवती ?''

''एताः कथाः वयं जानीमः एव । एताः किं पञ्चतन्त्रीयाः ?'' इति आश्चर्येण पृष्टवान् सन्दीपः ।

''आम् । तथापि पञ्चतन्त्रीयां काञ्चित् लघुकथां श्रावयामि तावत् । एतस्याः कथायाः नीतिः अद्यापि सङ्गच्छते लोके । भवन्तः द्विशिरस्कस्य सर्पस्य मानवस्य वा जननं कदाचित् श्रुतवन्तः एव स्युः खलु ? कदाचित् द्विशिरस्कः तादृशः पक्षी जन्म प्राप्तवान् । ते शिरसी परस्परविमुखतया शरीरे लग्ने आस्ताम् । अतः एकं शिरः यां दिशं पश्यति तद्विरुद्धदिशं पश्यति स्म अपरं शिरः । कदाचित् एकं शिरः पुष्पपात्रं अपश्यत् । द्वितीयं शिरः अपि तत् दृष्ट्वा पातुम् ऐच्छत् । किन्तु द्वितीयाय अदत्त्वा एव प्रथमं शिरः तत्रत्यं मकरन्दम् अपिबत् । एतेन क्रुद्धम् अपरं शिरः द्वितीयस्य हानिं कर्तुम् इच्छत् समीपे दृष्टं विषम् अपिबत् । उभयम् अपि एकस्य शरीरस्य भागभूतौ आस्ताम् इत्यतः तस्य पक्षिणः प्राणाः शरीरात् निर्गताः ।''

''एतस्याः नीतिः का इति ज्ञातम् अस्माभिः । 'वयं सर्वे एकस्याः एव भूमेः भागभूताः । एकः देशः यदि मूर्खकार्यं कुर्यात् तर्हि तस्य फलम् इतरैः अपि देशैः अनुभोक्तव्यं भवेत् इत्येतत् एव एतस्याः कथायाः तात्पर्यं ननु ?'' इति अपृच्छत् सन्दीपः ।

देवनाथवर्यः मन्दहासपूर्वकं शिरः चालितवान् ।



# नववर्षाचरणम् एप्रिल्मासे

*भारते बहवः ग्रेगोरियन्दिनदर्शिकायाः एप्रिल्मासं महत्त्वपूर्णं मन्यन्ते । देशस्य बहुषु भागेषु नववर्षारम्भम् आचरन्ति जनाः एतस्मिन् मासे । एषः नववर्षारम्भः सस्यसङ्ग्रहकालीनः भवति ।*

## वैशाखी

पञ्जाबीयाः वैशाखीदिने नववर्षारम्भम् आचरन्ति । एषः उत्सवः सम्भवति एप्रिल्मासस्य १२दिनाङ्के । (काचित्कतया चतुर्दशे दिनाङ्के अपि) अयम् उत्सवः सस्यसङ्ग्रहणकालसम्बद्धः ।

तदवसरे 'राबी'सस्यस्थानि धान्यानि सङ्ग्रहयोग्यानि भवन्ति । कृषिक्षेत्राणि धान्यैः पूर्णानि हरिद्वर्णमयानि च भवन्ति । धान्यसङ्ग्रहः धनहेतुकः सुखहेतुकः च खलु ? अतः सर्वे कृषिकाः सन्तुष्टान्तरङ्गाः भवन्ति । नृत्यगीतादिषु उत्सवाचरणादिषु च सहजतया उत्सुकं भवति तेषां मनः ।

अतः एव वैशाख्याः आचरणे दृश्यते अधिकः उत्साहः । समग्रः कृषिकसमाजः एतम् उत्सवम् आचरति । भाङ्ग्र, गिद्दा इत्यादीनि शक्तिवर्धकानि नृत्यानि कुर्वन्ति पुरुषाः महिलाः च उत्सवावसरे ।



जनाः साम्प्रदायिकं श्वेतवस्त्रं धरन्ति उत्सव दिने । प्रायः एषः उत्सवः नदीतीरे आचर्यते । जनाः सद्यःनिर्मितेन गोधूमपिष्टेन, घृतेन, गुडेन च मिश्रितां रोटिकां खादन्ति तद्दिने । समग्रं दिनम् आनन्दद्योतकैः कृत्यैः भोजोत्सवादिभिः च याप्यते । खालसासम्प्रदायः अपि एतस्मिन् एव दिने आरब्धः । दशमः सिक्खगुरुः गुरुगोविन्दसिंहवर्यः १६९९ तमे वर्षे खालसासम्प्रदायस्य आरम्भं कृतवान् । अतः नववर्षारम्भकारणतः खालसासम्प्रदायस्य कारणतः च सिक्खानां दृष्ट्या 'वैशाखी' महत्त्वपूर्णं पर्व ।

# गुडिपाड्वा

'गुडिपाड्वा' पर्व नववर्षारम्भदिने आचर्यते महाराष्ट्रियैः । वर्षस्य प्रथममासस्य चैत्रस्य प्रथमे दिने पर्व आचर्यते । एतत् अपि धान्यसङ्ग्रहकालीनम् एव । एतस्मिन् पर्वदिने नूतनकार्याणाम् आरम्भः क्रियते ।

'गुडि' इत्येषः जयस्य सङ्केतः । अलङ्कृतः कलशः एव गुडि इति उच्यते । कलशं कौशेयवस्त्रेण आच्छाद्य आम्रपर्णपुष्पादिभिः अलङ्क्रियते । स च कलशः गृहस्य पुरतः स्थाप्यते । दुष्टशक्तिं दूरीकृत्य गुडि सम्पत्तिं वर्धयति इति महाराष्ट्रियाणां विश्वासः ।

गुडि प्रकृतिपूजा अपि । गुडिपूजाङ्गभूतः



कलशः प्रातः प्रतिष्ठापितः सन् सायङ्कालपर्यन्तं गृहस्य पुरतः एव तिष्ठति ।

तस्मिन् दिने जनाः नूतनवस्त्राणि धृत्वा भोजोत्सवादिषु भागं वहन्ति । गृहस्य अङ्गणानि वर्णमयरङ्गवल्ल्यादिभिः अलङ्क्रियन्ते । निम्बपर्णानि, तिन्त्रिणी, गुडः इत्यादिभिः सज्जीकृतं पाकविशेषं जनाः प्रातः एव सेवन्ते । एतस्मिन् एव दिने भगवान् रामः वानरनायकं वालिनं जितवान् इति महाराष्ट्रियाः भावयन्ति ।

भगवान् विष्णुः एतस्मिन् एव दिने मत्स्यावतारं प्राप्य भूमेः संरक्षणं कृतवान् इत्यपि भावयन्ति ।

# नवं वर्षम्

बङ्गालीयाः नवं वर्षं 'नबं बर्षम्' इति उच्चारयन्ति । वैशाखमासस्य प्रथमं दिनं नववर्षत्वेन आचर्यते बङ्गालीयैः महता उत्साहेन । एषः उत्सवः 'पौला बैशाख्' इत्यपि निर्दिश्यते तैः । देहल्याः पुरतः नारिकेलफलेन, आम्रपर्णैः, पवित्रजलेन च युक्तः कलशः स्थाप्यते पर्वदिने । मधुरखाद्यानि उत्सवस्य अङ्गतया सज्जीक्रियन्ते ।

# रङ्गोलीबिहू



रङ्गोलीबिहू असमीयानां नववर्षोत्सवः । एप्रिल्मासस्य मध्यभागे एषः आचर्यते । एषः उत्सवः नूतनस्य कृषिवर्षस्य आरम्भं बीजावापस्य आरम्भं च ज्ञापयति । असमीयैः बहवः बिहू-उत्सवाः आचर्यन्ते । तेषु अतिविशिष्टः उत्सवः एषः एव । एतस्य अपरं नाम 'बोहागबिहू' इति ।

विनोदसृष्टिः, आनन्दानुभवः च एतस्य उत्सवस्य प्रमुखं वैशिष्ट्यम् । एतस्मिन् दिने तरुण्यः साम्प्रदायिकशैल्या बिहूनृत्यं कुर्वन्ति । बिहूगीतानि गीयन्ते तदवसरे । नृत्यावसरे 'पेपा'नामकं वृषभशृङ्गनिर्मितं वाद्यं, ढोलकम् इत्यादीनि पारम्परिकवाद्यानि उपयुज्यन्ते ।

# विशु



मलयालजनानां नववर्षोत्सवस्य नाम विशु इति । मलयालीयानां वर्षस्य प्रथममासस्य (मेडम्नामकस्य) प्रथमे दिने एतत् पर्व भवति । तन्नाम एप्रिल्मेमासयोः मध्यभागे कदाचित् भवति सः । तस्मिन् दिने 'विशुकणि'नामकं दृश्यते सर्वैः अपि ।

तण्डुलः नवं वस्त्रं, सुवर्णम्, उर्वारुकम्, पूगः, शिग्रूपर्णानि, दर्पणः, 'कोन्ना'नामकं पीतं पुष्पम्, पवित्राः ग्रन्थाः, नाणकानि इत्यादीनि 'उरुलि'नामके कांस्यपात्रे स्थापयन्ति । एतत् एव उच्यते 'कणि' इति । विषुपर्वणः पूर्वदिने गृहस्य ज्येष्ठमहिलया

'कणि' सज्जीक्रियते । विशुदिने प्रातः एव यः एतत् पश्यति तदीयं वर्षं शुभकरं भवति इति जनानां विश्वासः ।

एतदवसरे जनाः 'कोडिवस्त्र'नामकं वस्त्रं नूतनवस्त्रं वा धरन्ति । तस्मिन् दिने ज्येष्ठाः आशीर्वदिच्छुकेभ्यः नाणकानि मधुरखाद्यानि च यच्छन्ति । एतदुच्यते - 'विशु'-कैनीट्टम्' । बालेभ्यः एषः आचारः विशेषतः रोचते । ते ज्येष्ठान् नमस्कृत्य नाणकानि प्राप्स्यन्ति । एवं सङ्गृहीतानि नाणकानि ते व्ययीकुर्वन्ति 'विशुवेला'नामिकायां विपण्याम् । भूरिभोजनादिकं भवति तस्मिन् दिने ।

# वर्षपरिपु



तमिळुजनाः एप्रिल्मासस्य १४ दिनाङ्के नववर्षारम्भम् आचरन्ति । तस्मिन् दिने 'चैत्रे'मासस्य आरम्भः भवति । एतद्दिनम् उच्यते 'वर्षपरिपु' इति । एतस्य अर्थः भवति - 'नववर्षारम्भदिनम्' इति ।

अत्रत्याः अपि 'कणि' इत्येतस्य दर्शनात् दिनारम्भं कुर्वन्ति । सुवर्णं, रजतं, फलानि, शाकाः, निम्बपर्णानि, पुष्पाणि, नूतनः तण्डुलः, नारिकेलम् इत्यादीनि शुभकराणि वस्तूनि एकस्मिन् पात्रे संस्थाप्य 'कणी' सज्जीक्रियते ।

कणिदर्शनं यः करोति तस्य अग्रिमं समग्रं वर्षं शुभकरं भविष्यति इति अत्रत्याः जनाः

भावयन्ति ।

एतस्मिन् दिने जनाः देवालयान् गच्छन्ति, पञ्चाङ्गं च पठन्ति । तस्मिन् दिने भोजने 'माङ्गाय् पचडि' भवेत् एव । तत् आम्रशलाटुना, निम्बपुष्पैः, गुडेन च सज्जीक्रियते । एतत् मधुरं, तिक्तम्, आम्लं च भवति । एतत् जीवनस्य उन्नत्यवनत्यादिकं द्योतयति इति जनाः भावयन्ति ।

गृहस्य द्वाराणि आम्रपर्णैः सज्जीकृतैः तोरणैः अलङ्क्रियन्ते । तण्डुलपिष्टेन निर्मितानि 'कोलम्स्' नामकानि अपि तदर्थम् उपयुज्यन्ते ।

# युगादिः



कर्णाटके आन्ध्रप्रदेशे नववर्षारम्भोत्सवस्य नाम युगादिः इति । तेलुगीयनववर्ष चैत्रशुक्लपञ्चमीतः आरप्स्यते । तदा एव वसन्तर्तोः आरम्भः अपि । तदवसरे क्षेत्राणि नवपल्लवैः विभूषितानि भवन्ति ।

युगादिपदम् एव सूचयति यत् एतस्मिन् दिने युगस्य आरम्भः जातः इति । सृष्टिकर्ता ब्रह्मा एतस्मिन् शुभदिने सृष्टेः आरम्भं कृतवान् इति जनाः भावयन्ति । अतः एव एतत् दिनं नववर्षस्य आरम्भदिनम् अपि जातम् । एतस्मिन् दिने नूतनकार्यस्य आरम्भः लाभाय इति जनानां विश्वासः ।

युगादिदिने आम्रपर्णनिर्मितेन तोरणेन गृहाणि अलङ्क्रियन्ते । जनाः नूतनवस्त्राणि धृत्वा देवालयं गच्छन्ति । सायं पञ्चाङ्गश्रवण-कार्यक्रमः प्रचलति ।

युगादिदिने अत्रत्याः जनाः 'युगातिपचडि' सेवन्ते । तच्च तिन्त्रिणी, मरीचिका, लवणं, निम्बपुष्पाणि, गुडः, आम्रपल्लवः इत्येतेषां मिश्रणेन सज्जीकृतं भवति ।

# बुद्धिमान् बीरबलः



राजा अकबरः प्रजानां हितार्थं बहूनि कार्याणि करोति स्म । कदाचित् तस्य मनसि प्रश्नः आगतः – 'मम प्रजासु कति जनाः निष्कपटाः स्युः ?' इति । कदाचित् सायङ्कालसमये आस्थानिकानां पुरतः सः एतं प्रश्नम् उपस्थापितवान् ।



''एतस्य ज्ञाने न महान् क्लेशः । 'निर्धनजनेभ्यः भोजनं दीयते । भोजनेच्छुना एकैकेनापि घटपरिमितं क्षीरम् आनेतव्यम्' इति घोषयतु'' इति अवदत् बीरबलः, यश्च स्वबुद्धिमत्तया ख्यातः आसीत् ।



''किन्तु तेन कः निष्कपटः, कश्च कपटः इति कथं ज्ञायते ?'' इति पृष्टवान् राजा । ''मया यथा उक्तं तथा आज्ञां करोतु । तदा भवतः प्रश्नस्य उत्तरं स्वयं प्राप्स्यते'' इति विश्वासपूर्वकम् उक्तवान् बीरबलः ।

राजा आज्ञां कारितवान् – ''अमुकदिने एकैकेनापि क्षीरघटः आनेतव्यः । प्रासादस्य प्रवेशात् पूर्वं द्वारसमीपे स्थापिते महापात्रे घटस्थं क्षीरं पातनीयं च'' इति ।





राज्ञा सूचितं दिनम् उपस्थितम् । जनाः घटम् आनीय पङ्क्तौ स्थितवन्तः । घटस्थं महापात्रे पातयित्वा प्रासादं प्रविष्टवन्तः च ।



अन्तिमः अपि यदा स्वपात्रस्थं महापात्रे पातितवान् तदा तस्य महापात्रस्य मुखम् आवरणेन पिहितम् । ततः तत् अकबरादीनां समीपम् आनीतं च ।



तदा बीरबलः राजानं साकूततया दृष्ट्वा भटान् आज्ञापितवान् – ''पात्रस्य आवरणम् अपनयन्तु'' इति । तेन सर्वैः पात्रस्थं द्रष्टुम् अवसरः प्राप्तः ।



''अहो जलम् !'' इति अत्याश्चर्येण अवदत् राजा । ''आं महाराज ! प्रजानां निष्कपटता कीदृशी इति अत्र स्फुटम् अस्ति'' इति अवदत् बीरबलः ।

# रज्जुसामर्थ्यवर्धनतन्त्रम्

आकाशे डयमानं तत् किं यस्य च निग्रहणं भूमितः भवति ? उत्तरं तु सरलम् । वाताटः इति । वाताटस्य उड्डायकाः सर्वे जानन्ति एव यत् तेषां वाताटरज्जवः न सामान्याः, अपि तु काचकधूलिलिप्ताः इति । काचकधूलिलिप्ताः रज्जवः त्रुटिताः न भवन्ति ।

काचकधूलिलिप्ततन्तुविषये काचित् घटना एवं श्रूयते- १८०० तमवर्षस्य समीपकाले जयपुरीयः राजा स्वामी द्वितीयरामसिंहः स्वभवनस्य उपरि स्थित्वा वाताटम् उड्डाययन् आसीत् । तावता अन्यः वाताटोड्डायकः तं स्पर्धार्थम् निमन्त्रितवान् । एतस्यां स्पर्धायां राज्ञः वाताटस्य रज्जुः कर्तिता ।

एतत् दृष्टवतः राज्ञः आश्चर्यं जातम् । विचारणात् तेन ज्ञातं यत् प्रतिस्पर्धिनः वाताटोड्डायकस्य चुण्डमणि-कलुरामनामकौ द्वौ सहोदरौ स्तः इति, तौ तन्तूनां दृढीकरणतन्त्रे निष्णातौ इति । इतः परं यदि भवन्तः वाताटस्पर्धायां कस्यचित् वाताटरज्ज्वाः छेदने समर्थौ भवतः तर्हि धन्यवादान् समर्पयन्तु चण्डमणि-कलुरामयोः कृते ।



# अर्चकवृत्तौ महिला

ओरिस्साराज्ये स्थितः कश्चन देवालयः नितरां विलक्षणः । तस्य गोपुरं सुवर्णफलकेन आवृतं नास्ति । आराध्यमूर्तिः जगत्प्रसिद्धा अपि नास्ति । तस्य वैशिष्ट्यं तु-अर्चिकायाः कारणतः । अर्चिका काचित् देवालये पूजावृत्तिं करोति इति तु आश्चर्याय एव खलु । सा



यत्र अर्चिका अस्ति स च देवालयः ओरिस्साराज्ये केन्द्रपाडाजनपदे सत्यभायाप्रदेशे अस्ति । एषः 'पञ्चुबरहि'देवालयः १३०० वर्षेभ्यः पूर्वं निर्मितः । अत्र पुरुषाः देवालयस्य गर्भगृहं प्रवेष्टुं न अर्हन्ति । धुलैनामके धीवरकुले जाताः महिलाः एव अत्र सर्वाणि पूजाकार्याणि निर्वहन्ति ।

# कलानिपुणाः प्राचीनाः



भित्तिषु चित्रविचित्रचित्राणि रेखाः च लिखतः बालान् दृष्टवन्तः खलु भवन्तः ? तान् मा तर्जयन्तु । यतः ते अस्मत्पूर्वजानां कृतिम् एव अनुकुर्वन्तः सन्ति । अस्मत्पूर्वजाः चित्राणि कागदेषु न लिखितवन्तः, अपि तु गुहानां भित्तिषु लिखितवन्तः ।

मध्यप्रदेशस्य भोपालसमीपे विन्ध्यपर्वतश्रेण्यां स्थितासु गुहासु भित्तिचित्राणि श्रेणीरूपेण प्राप्यन्ते । इतिहासज्ञाः वदन्ति यत् एतानि चित्राणि दशसहस्राधिकवर्षेभ्यः पूर्वं रचितानि इति ।

तत्काले जनजीवने ये विषयाः भवन्ति स्म ते अत्र चित्रिताः सन्ति । तन्नाम मृगया, मुखावरणसहितनृत्यम्, मधुसङ्ग्रहः, पशुयुद्धम्, अश्वारूढानां प्रयाणम्, आयुधानि इत्यादयः तत्र सन्ति ।

भल्लूकः, हरिणः, सिंहः, व्याघ्रः, शुनकः इत्यादयः पशवः अपि तत्र चित्रिताः सन्ति । ते प्रायः रक्तश्वेतवर्णमयाः । क्वचित् एव हरितपीतवर्णौ अपि उपयुक्तौ दृश्येते ।

# मल्लानां वहने कष्टम्

द्वादशे शतके भारतस्य विविधेषु भागेषु मल्लस्तम्भनामिका क्रीडा प्रचलति स्म बहुधा । बाहुयुद्धम् एव एतत् । उभौ मल्लौ अन्यस्य स्कन्धम् आरुह्य युद्धं कुरुतः स्म । क्रीडासमाप्तिपर्यन्तं तौ मल्लयोः वोढारौ कटिपरिमिते जले



तिष्ठतः स्म । तादृशानां वहनकर्तॄणां कष्टं चिन्तयन्तु भवन्तः । शीतले जले दीर्घकालं स्थातव्यम् । ये तेषां स्कन्धे स्थित्वा युद्धं कुर्वन्ति तेषां भारोऽपि न सामान्यः, अपि तु त्रिंशत्-अधिकशतकिलोपरिमितः !!

# कर्णाटकीया जानपदकथा

कर्णाटकं १,९२,००० चतुरस्र कि.मी. विस्तारयुक्तम् । दक्षिणभारते पश्चिमभागे अस्ति एतत् राज्यम् । एतस्य पूर्वभागे अस्ति आन्ध्रप्रदेशः । एतस्य दक्षिणभागे तमिलु-नाडुकेरलराज्ये स्तः, उत्तरभागे महाराष्ट्र-राज्यम् अस्ति । भारतस्य भूविस्तारस्य षोडशतमं भागं वहति एतत् राज्यम् । अत्रत्यजनसङ्ख्या ५ कोटिमिता प्रायः । कर्णाटकस्य जनाः निर्दिश्यन्ते 'कन्नडिग' इति । ते कन्नडभाषया व्यवहरन्ति । कृष्णमृत्तिका-कारणतः एतस्य नाम 'करिनाडु' इति आसीत् । ततः कर्णाटकपदम् उत्पन्नम् इति केचन वदन्ति । 'सुन्दरप्रदेशः' इत्येतस्य अर्थस्य द्योतकात् 'करु नाडु' पदात् कर्णाटकपदम् उत्पन्नम् इति अपरे वदन्ति । यस्य नाम कर्णेषु अटति तत् कर्णाटकम् इति तु संस्कृतव्युत्पत्तिः ।

एतस्य राजधानी बेङ्गलूरु । एतत् नगरं भारतस्य विज्ञानकेन्द्रम् इव । 'इलेक्ट्रानिक् सिटि' इत्यपि ख्यातिरस्ति एतस्य, यतः बहूनां देशानां महा - इलेक्ट्रानिक्संस्थानां शाखाः सन्ति अत्र । एशियाखण्डे महता वेगेन वर्धमानं नगरम् एतत् एव ।

## मल्लिकाराजकुमारी

कावेरीनद्याः काचित् उपनदी पश्चिमपर्वतावल्यां स्थितात् कस्माच्चित् लघुपर्वतात् प्रवहति । सा अरण्येषु क्षेत्रेषु च प्रवहति । तस्याः तीरे मल्लिकाः, पाटलानि, अन्यानि सुन्दरपुष्पाणि च वर्धन्ते । तं प्रदेशं कश्चन राजा पालयति स्म ।

कदाचित् तस्य राजधानी असङ्ख्यैः सर्पैः व्याप्ता अभवत् । अतः जनजीवनं विपत्तिग्रस्तं जातम् ।



एतस्य निवारणार्थं किं करणीयम् इति राजा न ज्ञातवान् । तस्य कश्चन पुत्रः आसीत् । सः एतस्याः समस्यायाः निवारणं प्रतिज्ञाय अरण्यं गतवान् । यथाशक्ति सर्पान् अन्विष्य मारितवान् च ।



एकस्मिन् दिने श्रान्तः युवराजः विश्रान्त्यर्थं कस्यचित् वृक्षस्य अधः उपविष्टवान् । तस्य अवधानं तु सर्वत्र आसीत् एव । तावता सप्त-फणात्मकः कश्चन सर्पः वृक्ष-शाखानां मध्यतः आगतः । एतत् दूरात् एव दृष्ट्वा युवराजस्य भटाः झटिति खड्गम् आकृष्टवन्तः । किन्तु तावता युवराजः तस्य सर्पस्य पीतनेत्राणि दृष्टवान् ।

सः झटिति आज्ञापितवान् – ''एतस्य मारणं मास्तु । एतस्य नेत्राणि वेदनां सङ्केतयन्ति । एषः मां किमपि वक्तुम् इच्छति इति भाति'' इति ।

ततः सः सर्पम् उद्दिश्य अवदत् – ''सर्पराज ! भवतः कीदृशं साहाय्यं करवाणि अहम् ?'' इति ।

तदा सर्पः मानवस्वरेण अवदत् – ''युवराज ! गतेभ्यः सप्तभ्यः वर्षेभ्यः अहं महतीं शिरोवेदनाम् अनुभवन् अस्मि । तस्याः घोरशिरोवेदनायाः कारणतः किमपि कर्तुम् अशक्तः अस्मि अहम् । सर्पाणां निग्रहणे अपि मम सामर्थ्यं नास्ति इदानीम् । अहम् अपि तेषां राजा । किं भवान् मम साहाय्यं कर्तुं शक्नुयात् ?'' इति ।

''मया किं करणीयम् इति वदतु तावत्'' इति अवदत् राजकुमारः ।

''भवतः राज्यस्य दक्षिणभागे सप्त-योजनदूरे अपरं किञ्चन राज्यम् अस्ति । तस्य राज्ञः काचित् पुत्री अस्ति । सप्तमल्लिकानां यावान् भारः तावान् एव भारः तस्याः । सा मल्लिकाराजकुमारी अद्यावधि हासं किं, मन्दहासम् अपि न प्रकटितवती । सा यदि हसिष्यति तर्हि त्रीणि मल्लिकापुष्पाणि पतिष्यन्ति । तथा पतितेषु द्वितीयं पुष्पं यदि अहं जिघ्रामि तर्हि झटिति एव स्वस्थः भविष्यामि । तदा च मम प्रजाः भवन्तं कदापि पीडयितुं न अर्हन्ति । किं भवान् तत् पुष्पं मम

# इतिहासः

कर्णाटकस्य उल्लेखः चन्द्रगुप्तमौर्यस्य काले (क्रि.पू. ३००) एव दृश्यते । चन्द्रगुप्तमौर्यः स्वजीवनस्य अन्तिमे काले जैनमतानुयायी जातः, कर्णाटकस्य 'श्रवणबेळगोळ'नामकं क्षेत्रं प्रति आगतवान् । बहूनां शतकानाम् अनन्तरं तत्र सप्तदशमीटरात्मकः गोमटेश्वरमूर्तिः स्थापिता अभवत् ।



निमित्तम् आनेतुं शक्नुयात् ?'' इति अपृच्छत् सर्पराजः ।

तदा राजकुमारः अवदत् - ''गमनसन्देशं पित्रे प्रेषयित्वा मल्लिकाराजकुमारीम् अन्विष्य तया मेलिष्यामि । सा यथा हसेत् तथा कृत्वा अहं भवते मल्लिकापुष्पाणि निश्चयेन आनेष्यामि'' इति ।

तस्य प्रयाणम् आरब्धम् । सः एकस्य सरोवरस्य समीपम् आगतवान् । यदा सः जलं पातुम् उद्युक्तः तदा जले प्लवमानः कश्चन पिपीलिकानीडः तेन दृष्टः । 'अहो, वराकाः पिपीलिकाः जले निमज्जन्त्यः सन्ति' इति विचिन्त्य सः उष्णीषं जले क्षिप्त्वा कष्टेन नीडं तीरे स्थापितवान् ।



तदा प्राणान् रक्षितवन्तं तं पिपीलिकाः उक्तवत्यः - ''भोः राजकुमार ! अस्माकं प्राणान् रक्षितवान् भवान् । अतः यदा आवश्यकं तदा अस्मान् स्मरतु । वयम् आगत्य भवतः साहाय्यं करिष्यामः'' इति ।

राजकुमारः अग्रे गत्वा घनारण्यम् प्रविष्टवान् । तत्र तेन कश्चन विलक्षणः करुणध्वनिः

श्रुतः । सः ध्वनिम् अनुसृत्य गतवान् । तत्र कश्चन राक्षसः तेन दृष्टः । कश्चन तिन्त्रिणीवृक्षः मूलैः तम् आवृतवान् आसीत् । यदा सः मुखम् उद्घाट्य सुप्तवान् आसीत् तदा कश्चन काकः तस्य मुखे यत् तिन्त्रिणीबीजं पातितवान् आसीत् तत् बृहदाकारेण विकसितं सत् स्वस्य मूलैः राक्षसं भूमौ बद्धवत् इव आसीत् । ततः आत्मानं मोचयितुम् अशक्नुवन् राक्षसः उच्चैः क्रन्दनं कुर्वन् आसीत् ।

राजकुमारः एतत् दृष्ट्वा खड्गेन तेषां मूलानां छेदनं कृतवान् । एतेन राक्षसः बन्धनात् विमुक्तः जातः ।

''भवान् यदि आगतवान् न स्यात् तर्हि न जाने, मम का गतिः अभविष्यत् इति । अतः यदा आवश्यकं तदा मां स्मरतु । अहं तत्क्षणे एव आगत्य भवतः साहाय्यं करिष्यामि'' इति ।

ततः विना क्लेशं सः प्रतिवेशिराज्यं प्रविष्टवान् । राजधानीं प्राप्य सः राज्ञे वार्तां प्रेषितवान् –''अहं दक्षिणदिशि स्थितस्य राज्यस्य राजकुमारः अस्मि । राजकुमारीं परिणेतुम् इच्छामि'' इति ।

एतां वार्तां श्रुत्वा राजा नितरां सन्तुष्टः । सुन्दरः राजकुमारः यदि जामातृत्वेन लभ्येत तर्हि कस्य वा राज्ञः सन्तोषः न भवेत् ? सन्तुष्टः सः राजकुमारं महता आदरेण स्वागतीकृतवान् ।

''भवान् मम पुत्रीं परिणेतुम् इच्छति इति तु महते सन्तोषाय । किन्तु तां यः परिणेतुम् इच्छति सः अस्माभिः सूचितासु तिसृषु परीक्षासु जयं प्राप्नुयात् । किम् एतत् अनुमन्यते भवता ?'' इति अपृच्छत् राजा ।

''काः ताः परीक्षाः ?'' इति धैर्येण पृष्टवान् राजकुमारः ।

''भवता माषदालैः तण्डुलाः पृथक्-

## सस्यादिसमृद्धिः



कर्णाटके काफी महता प्रमाणेन वर्ध्यते । कोडगुजनपदे चिक्कमगलूरुजनपदे च तत् आधिक्येन वर्ध्यते। शिवमोग्गाजनपदे अतिश्रेष्ठं पूगफलम् अपि वर्ध्यते ।

कर्णाटके सुगन्धोपेतानि पुष्पाणि वृक्षाः चापि वर्धन्ते । पीतवर्णीयः सुगन्धोपेतः चम्पकः, मल्लिका च अत्र वर्ध्यन्ते । पनसः श्रीगन्धः इत्यादयः वृक्षविशेषाः अपि अत्र प्राप्यन्ते ।

'मलेनाडु'प्रदेशे एला, मरीचः इत्यादयः विशेषपाकोपयोगीनि द्रव्याणि आधिक्येन वर्ध्यन्ते ।

करणीयाः इति तु प्रथमा परीक्षा । यदि अत्र जयः प्राप्यते तर्हि मया द्वितीयपरीक्षायाः स्वरूपम् उच्यते'' इति राजकुमारम् अवदत् राजा ।

ततः राजकुमारः धान्यप्रकोष्ठं प्रति गतवान् । तत्र तण्डुलमाषयोः राशिः भवनस्य छर्दिं स्पृशति स्म । एतं राशिं दृष्ट्वा सः पिपीलिकागणं स्मृतवान् । अनन्तरक्षणे पिपीलिकासैन्यं तत्र उपस्थितम् । मध्यरात्रस्यसमाप्तितः पूर्वम् एव ताः तण्डुलान् माषेभ्यः पृथक्कृतवत्यः । प्रातःकालतः पूर्वं तत्र माषस्य तण्डुलस्य च राशिः पार्थक्येन आसीत् ।

प्रातःकाले आगतः राजा कार्यं सम्पन्नं दृष्ट्वा सः नितराम् आश्चर्यचकितः सन्तुष्टः च । सः द्वितीयपरीक्षायाः नियमम् अवदत् - ''शतप्रस्थमिततण्डुलेन निर्मितः पाकः भवता भोक्तव्यः, शतभाण्डमितं तक्रं च पातव्यम्'' इति ।

राजकुमारः एतत् अङ्गीकृतवान् । सः राक्षसं स्मृतवान् । राक्षसः आनन्देन भोजनं कृत्वा आतृप्ति तक्रं पीतवान् । ततः सः राजकुमाराय धन्यवादान् समर्प्य मन्दहासपूर्वकं ततः निर्गतवान् ।

अनन्तरपरीक्षा आसीत् महाघण्टायाः वादनम् । सा च घण्टा पर्वतशिखरे स्थापिता आसीत् । तस्याः ध्वनिः समग्रे देशे श्रोतुं योग्यः आसीत् । राजकुमारः पर्वतशिखरं गत्वा तस्याः घण्टायाः महाकारतां दृष्ट्वा पुनरपि राक्षसं स्मृतवान् ।

झटिति राक्षसः उपस्थाय अपृच्छत् - ''का आज्ञा ?'' इति ।

''राक्षसवर्य ! किम् एतां घण्टां वादयित्वा उच्चध्वनिम् उत्पादयितुं शक्नुयात् भवान् ?'' इति अपृच्छत् राजकुमारः ।

राक्षसः अङ्गीकारपूर्वकं शिरः चालयन् रज्जुम् आकृष्य घण्टां वादितवान् । ततः उत्पन्नः ध्वनिः सप्तसु राज्येषु श्रुतः । राजा अपि तं ध्वनिं श्रुतवान् एव । सः झटित्येव स्वपुत्रीराजकुमारयोः विवाहार्थं व्यवस्थां कारितवान् । विवाहः सवैभवं प्रवृत्तः । विवाहानन्तरं तौ

## कलाकौशलम्

सोरब, सागर, कुमटा इत्यादिषु प्रदेशेषु जाताः 'गुडिगार'पदवाच्याः कलाकाराः श्रीगन्धकाष्ठे हस्तिदन्तेषु च सूक्ष्मचित्रादिनिर्माणेसुनिपुणाः चन्दनशिल्पं, वेणुशिल्पं, लाक्षाशिल्पं, मृत्तिकाशिल्पं सुगन्धद्रव्यनिर्माणम् इत्यादिषु कर्णाटकराज्यम् अग्रगण्यम् अस्ति कौशेयोद्यमविषये अपि कर्णाटकस्य अग्रगण्यता अस्ति एव ।







दम्पती उपायनैः सह राजकुमारस्य राजधानीं प्रति प्रस्थितवन्तौ ।

गमनसमये कस्मिंश्चित् ग्रामे कश्चन डोम्बानां कार्यक्रमः तैः दृष्टः । डोम्बाः कपीन् सुप्रशिक्षितान् कृत्वा तेषां द्वारा विविधकार्यक्रमान् कारयन्ति स्म ।

''किं तत् ?'' इति कुतूहलेन पृष्टवती राजकुमारी । तस्याः भारः अत्यल्पः आसीत् इत्यतः महत्या जागरूकतया पालिता आसीत् सा। अतः एतादृशं सर्वं कदापि न दृष्टवती आसीत् सा ।

''आगच्छतु, पश्याम'' इति वदन् राजकुमारः मार्गस्य पार्श्वे एव रथं स्थगितवान् ।

कपीनां कार्यक्रमाः राजकुमार्यै विशेषतः अरोचन्त । तान् दृष्ट्वा हासं निरोद्धुम् अशक्ता सा उच्चैः हसितवती एव । तदा तस्याः मुखतः त्रीणि मल्लिकापुष्पाणि पतितानि । तानि सङ्गृह्य राजकुमारः सर्पाय दत्तवान् । तेषाम् आघ्राणनतः सर्पः झटिति स्वस्थः जातः ।

सः एकं रत्नं राजकुमाराय दत्त्वा अवदत् - ''यदा मम आवश्यकता भवति तदा एतत् सध्यानं पश्यतु । अहम् उपस्थितः भविष्यामि'' इति ।

## दर्शनयोग्यानि स्थलानि

कर्णाटके दर्शनीयानि स्थलानि सन्ति बहूनि । प्राकृतिकसौन्दर्याणि मानवनिर्मितसौन्दर्याणि च अत्र सन्ति अनेकानि । बण्डिपुरनागरहोळे इत्यत्र स्थिते अभयारण्ये गजाः, वनमहिषाः, अन्ये च वन्यप्राणिनः आधिक्येन द्रष्टुं शक्याः । शरावतीनदी जगत्प्रसिद्धं जोगजलपातम् उत्पादयति । मैसुरुनगरस्य वृन्दावनोद्यानम् अन्यानि स्थलानि च अतिरमणीयानि । बळ्ळारिचित्रदुर्गनगरयोः स्थितानि पर्वतदुर्गाणि, बादामी, ऐहोळे इत्यत्र स्थिताः गुहादेवालयाः, हळेबीडुबेलूरु इत्यत्र स्थिताः सूक्ष्मशिल्पकलामयाः देवालयाः, अखण्डशिलया निर्मिता अत्युन्नता गोमटेश्वरमूर्तिः (श्रवणबेळगोळनगरे) कृष्णशिलानिर्मितः चामुण्डीवृषभः, हम्पीस्थाः प्राचीनावशेषाः, होय्सळशैल्या निर्मिताः देवालयाः, बिजापुरीयं गोलगुम्बजम् इत्यादीनि सन्ति दर्शनीयस्थलानि कर्णाटके ।

# वार्ताविशेषः

## अन्तरिक्षयात्रां प्रति अनुज्ञा




एप्रिल्मासे द्वितीयगगनयात्रिकः अन्ताराष्ट्रियान्तरिक्षस्थानकम् (I.S.S) प्राप्स्यति इत्येतत् निश्चितप्रायं जातम् अस्ति । तस्य सौभाग्यशालिनः नाम शटल्वर्त् इति । सः दक्षिणाफ्रिकीयः वाणिज्योद्यमी । तेन एतस्याः गगनयात्रायाः निमित्तं २० कोटि-डालर्मितं धनं दत्तम् अस्ति । अमेरिकीया गगनयात्राव्यवस्थापिका संस्था 'नासा' इदानीम् आत्मविश्वासयुक्ता अस्ति एतस्य प्रेषणे । गते वर्षे एतया डेनिस् टिटोवर्यः अन्तरिक्षस्थानकं प्रति प्रेषितः आसीत् । अतः सा इदानीं २८ वर्षीयाय शटल्वर्त्वर्याय प्रशिक्षणं यच्छन्ती अस्ति । सः रशियन्राकेट्-आरोहणात् पूर्वं रशियादेशे अपि प्रशिक्षणं प्राप्स्यति । ब्रिटन्देशः एतस्यै यात्रायै प्रयाणानुज्ञापत्रदानप्रक्रियां समापितवान् अस्ति । धूमपानं, सुरापानं, मादकद्रव्यसेवनम् इत्यादीनि ये कुर्वन्ति तेभ्यः प्रयाणानुज्ञापत्रं न दीयते । आरोग्यदृढीकरणपत्रेण सह आंग्ल-ज्ञानपत्रम् अपि अपेक्ष्यते अत्र !

## मङ्गलग्रहस्थानां कृते सङ्गीतम्



बियागल् (द्वितीयः) २००३ तमवर्षस्य डिसेम्बर्मासस्य २३ दिनाङ्के यदा मङ्गलग्रहे पदं स्थापयिष्यति तदा ब्लर्नामकेन ब्रिटिश पाप्सङ्गीतगणेन सज्जीकृतं सङ्गीतं श्रावयिष्यति । सङ्गीत-प्रशंसावसरे प्रायः अभिमानेन उच्यते - 'लोकातीतम् एतत्' इति । इदानीं तु 'ब्लर्'-गणः आत्मना सज्जीकृतं सङ्गीतं वस्तुतः अपि लोकातीतं कुर्वन् अस्ति । 'दि बियागल् हेस् लेण्डेड्' इत्येतत् गीतं सवाद्यध्वनि सज्जीकृतमस्ति तेन । निश्चिते मुहूर्ते तत् गीतं मङ्गलस्थैः भूमिस्थैः चापि श्रोष्यते ।



# विघ्नेश्वरः

पुत्रस्य गणपतेः आक्रन्दनं श्रुत्वा पार्वती धावन्ती आगतवती । कर्तितं शिरः दृष्ट्वा सा शिवं क्रोधेन पश्यन्ती अवदत् – ''किम् एतत् कृतं भवता ? पुत्रः एव निहतः खलु ! पुत्रघातकः भवान् !'' इति । ततः सा दुःखं सोढुम् अशक्नुवती भूमौ पतित्वा उच्चस्वरेण रोदनं कृतवती ।

एतां घटनाम् अत्याश्चर्येण पश्यन्तः तत्र स्थिताः सर्वे स्तब्धाः अभवन् । अपराधिनम् इव शिवं कुतूहलपूर्णदृष्ट्या दृष्टवन्तः ते । एतस्मात् शिवः स्वेदेन क्लिन्नः जातः । सः मन्दस्वरेण पार्वतीम् अपृच्छत् – ''किम् एतत् वदति भवती ? आवयोः कश्चन पुत्रः अस्ति इति इदानीम् एव श्रुतं मया । आवयोः पुत्रः कः ? सः कथं पुत्रत्वं प्राप्तवान् ? कुतः आगतः सः ?'' इति ।

तदा पार्वती गद्गदकण्ठा सती एव गणपतिजननविचारम् उक्तवती । सर्वं श्रुत्वा शिवः असम्मतिपूर्वकम् उक्तवान् – ''एतं स्वपुत्रं भावितवती स्यात् भवती । किन्तु एषः आवयोः पुत्रः कथं भवेत् ? एतं पुत्रं भावयन्ती भवती मां बहुधा निन्दितवती । तदस्तु नाम, एषः मम पुत्रः कथं भवितुम् अर्हति ?'' इति ।

एतत् श्रुत्वा पार्वती निर्वचना जाता । तदा विष्णुः ब्रह्माणं नेत्रसङ्केतेन सूचितवान् । ब्रह्मा अग्रे आगत्य अवदत् – ''यदा शिवः पार्वत्याः पाणिं गृहीतवान् तदा एव शिवस्य तेजः पार्वतीं प्राविशत् । तस्मात् सा पुलकिता जाता अपि । ततः आरभ्य पार्वती शिवस्य अर्धभागेन, शिवश्च पार्वत्याः अर्धभागेन च युक्तौ जातौ । एवं गणपतिः शिवस्यापि पुत्रः एव'' इति ।



पार्वती तु शिवेन सान्त्व्यमाना अपि गणपतेः शवस्य उपरि पतित्वा रोदनं कुर्वती आसीत् । तद अशरीरवाणी काचित् श्रुता - ''उत्तरदिशि शिरः स्थापयित्वा शयनं कृतवतः शिरः आनयन्तु, एतेन मुण्डेन योजयन्तु च । तदा अहं जीवितः भविष्यामि'' इति । गणपतेः एतं ध्वनिं सर्वे आश्चर्येण श्रुतवन्तः ।

तस्मिन् एव क्षणे प्रमथगणीयाः उत्तरदिशि शिरः स्थापयित्वा शयनं कृतवतः अन्वेषणार्थं गतवन्तः । बहुधा अन्वेषणेन अपि तैः तादृशः कोऽपि जनः न दृष्टः एव ।

तथापि ते पराजयम् अङ्गीकर्तुं न सिद्धाः । ते अन्वेषणम् अनुवर्तितवन्तः । सह्यपर्वतस्य कस्याञ्चित् गुहायां तैः कश्चन करिकलभः दृष्टः । सः उत्तरदिशि शिरः संस्थाप्य शयनं कृतवान् आसीत् । निद्रावस्थायाम् अपि सः शिवस्य नाम्नः स्मरणं करोति स्म निरन्तरम् ।

सः करिकलाभः न अन्यः, अपि तु देवगजस्य ऐरावतस्य पुत्रः गजेन्द्रः एव । ऐरावतः देवेन्द्रस्य वाहनम् । कदाचित् इन्द्रः देवलोकमार्गेण यदा गच्छन् आसीत् तदा ऐरावतपुत्रः गजेन्द्रः इन्द्रस्य दिशि अवधानम् अयच्छन् ध्यानमग्नः आसीत् । एताम् उपेक्षाम् असहमानः इन्द्रः क्रोधेन गर्जितवान् - ''मम वाहनभूतस्य पुत्रस्यापि भवतः एतावान् गर्वः !'' इति ।

तदा गजेन्द्रः शान्तस्वरेण अवदत् - ''मम पिता भवतः सेवकत्वेन कर्तव्यं निर्वहन् अस्ति, न अहम् । अतः भवत्तः मया भीतिः प्राप्तव्या नास्ति'' इति ।

''अये ! गजपुत्र ! भवान् किं न जानाति यत् अहं देवानाम् इन्द्रः इति ?'' इति गर्वेण एव अपृच्छत् इन्द्रः ।

''आं, जानामि । भवान् देवेन्द्रः चेत् अहं गजेन्द्रोऽस्मि । कश्चन नागेन्द्रः भवति, अपरः खगेन्द्रः भवति । एवम् इन्द्राः बहवः भवितुम् अर्हन्ति । शतं यज्ञान् कृतवान् यः कोऽपि इन्द्रपदवीं प्राप्तुम् अर्हति । तपस्यया यत्किमपि साधयितुं शक्यते । अतः एव कस्यचित् तपः दृष्ट्वा भवान् अपि भीतिम् अनुभवति । इन्द्रत्वं तावत् श्रेष्ठं न, यावत् भवान् भावयति । अतः अलम् अधिकगर्वेण'' इति अवदत् गजेन्द्रः ।

तदा क्रोधमूर्च्छितः इन्द्रः शापं दत्तवान् - ''भवतः शिरः कर्तितं भवतु'' इति ।

एतत् श्रुत्वा गजेन्द्रः हसन् उक्तवान् - ''शिवस्य आज्ञां विना तृणम् अपि न चलति ।

यत् शिरः भवता निन्दितं तस्य पुरतः एव भवता अपि स्वशिरः अवनमनीयं स्यात् कदाचित् । स्मरतु एतत्'' इति ।

गजेन्द्रः महाज्ञानी इति गर्वान्धः देवेन्द्रः न जानाति स्म । सः गर्वेण – ''शिवे भक्तिः खलु भवतः ? सः शिवः एव भवन्तं रक्षतु । भूलोके गत्वा पततु'' इति वदन् भूलोकं प्रति गजेन्द्रस्य नोदनं कृतवान् । तस्मात् गजेन्द्रः सह्यपर्वते अपतत्, शिवं निरन्तरं स्मरन् अतिष्ठत् च । उत्तरदिशि शिवस्य निवासस्थानम् अस्तीति कारणतः तस्यां दिशि स्वशिरः कृत्वा शयनम् अकरोत् सः ।

प्रमथगणीयाः गजेन्द्रस्य शिरः कर्तयित्वा नीतवन्तः । यदा ते तत् गणपतिमुण्डे योजितवन्तः तदा गजमुखः गणपतिः जीवं प्राप्य उत्थितवान् ।

''मम पुत्रस्य एतादृशं मुखम् ! एतत् अहं द्रष्टुं न शक्नोमि'' इति वदन्ती नेत्रे निमीलितवती ।

तदा गजमुखः मधुरस्वरेण अवदत् – ''अम्ब ! किमर्थं दुःखं भवत्याः ? यत् भवेत् तत् जातम् एव निर्विघ्नतया । भवती एकस्मिन् दिने भित्तौ गजचित्रं दृष्टवती आसीत् खलु ? तत्र दृष्टः अहम् एव । विघ्नेश्वरोऽस्मि अहम्'' इति ।

पार्वती झटिति तां घटनां स्मृतवती । शिवः अपि तां घटनां स्मृतवान् ।

''विघ्नेश्वर ! सः एव भवान् मम पुत्रत्वेन जन्म प्राप्तवान् अस्ति । किम् एतदर्थम् एव मां क्रोधितं कृतवान् ? सर्वम् अवगतं मया । भवतः लीला अपूर्वा'' इति अवदत् शिवः ।



''यदि अहम् एवं न कुर्यां तर्हि भवान् कथं वा गजासुराय दत्तं वचनं पालयेत् ?'' इति वदन् विघ्नेश्वरः गजासुराय दत्तं वचनं स्मारितवान् ।

तत् श्रुत्वा हर्षं प्रकटयन् शिवः – ''सत्यम्, दत्तं वचनं स्मारयता भवता युक्तम् एव कृतम् । दत्तस्य वचनस्य अनुगुणं मया गजचर्म धरणीयं खलु'' इति वदन् गजचर्म आनाय्य धृतवान् ।

ततः शिवः विघ्नेश्वरस्य पुरतः शिरः अवनमय्य – ''विघ्नेश्वर ! भवतः विश्वरूपं दर्शयतु कृपया'' इति ।

तदा विघ्नेश्वरः आकाशं यावत् प्रवृद्धः सन् अतिष्ठत् । तस्य पञ्च शिरांसि आसन् । पृथिव्यप्तेजोवाय्वाकाशानां पञ्चभूतानां ये वर्णाः आसन् तैः वर्णैः तानि मुखानि शोभन्ते



स्म । तेषां पञ्चभूतानां वर्णाश्च – हरित्, श्यामः, रक्तः, श्वेतः, नीलः च । तस्य शिरस्सु नक्षत्राणि पुष्पाणि इव शोभन्ते स्म । तस्य केशाः आकाशे विकीर्णाः आसन् । तस्य विविधेषु हस्तेषु अङ्कुशः, परशुः, पाशः, कलशः, शङ्खः, चक्रं, गदा, त्रिशूलं, वज्रायुधम् इत्यादयः आसन् । एवमेव जपमाला, कमण्डलुः, वीणा, खड्गः, शक्तिः, शूलम् इत्यादयः अपि आसन् । आकाशस्थ-शिरस्कस्य तस्य तेजोमयं मुखं द्रष्टुम् अशक्नुवन्तः द्रष्टारः स्वमुखम् अधः कृतवन्तः । सर्वे अनिर्वचनीयम् आनन्दं प्राप्तवन्तः ।

सरस्वती वीणाम् उन्नीय विघ्नेश्वरस्य प्रियं रागं हंसध्वनिम् आलापितवती । नारदः मायामालवरागस्य आलापनं कृतवान् । शिवः आनन्देन ताण्डवनृत्यं कृतवान् ।

इन्द्रादयः त्रयस्त्रिंशत्कोटिदेवाः शिरः अवनमय्य प्रणामं कृतवन्तः । एवं प्रणामसमये – 'यत् उपेक्षितं तस्य शिरसः पुरतः भवता अपि कदाचित् अवनमनीयं भवेत्' इत्येतत् गजेन्द्रेण उक्तं वचनम् इन्द्रस्य मनसि आगतम् । सः जानाति स्म यत् गणपतेः मुण्डे गजेन्द्रस्य शिरः योजितम् अस्ति इति । अतः सः स्वकर्णौ हस्ताभ्यां गृहीत्वा त्रिवारम् उपविश्य उत्थाय साष्टाङ्गं नमस्कृत्य अवदत् – ''गजेन्द्र ! भवान् महाज्ञानी अस्ति । अहम् अज्ञानी अस्मि । मया गर्वः यः प्रदर्शितः तदर्थं क्षमा प्रदर्शनीया'' इति । अन्ये देवाः अपि ज्ञानेन अज्ञानेन वा कृतस्य अपराधस्य निमित्तं क्षमां याचितवन्तः । विश्वरूपं धृतवन्तं विघ्नेश्वरम् उद्दिश्य शिवः अवदत् – ''विघ्नेश्वर ! भवतः रूपस्य वैशिष्ट्यानि कानि इति ज्ञातुं वयं समुत्सुकाः स्मः'' इति ।

तदा विघ्नेश्वरः गम्भीरस्वरेण – ''शिव-भक्तानाम् एतत् सम्मेलनम् एव विश्वम् । अहं तु विश्वजननीजनकयोः पार्वतीशङ्करयोः पुत्रः अस्मि । अतः अहं करौ योजयित्वा तौ नमस्करोमि आदौ'' इति उक्त्वा शिवं पार्वतीं च भक्त्या नमस्कृतवान् ।

ब्रह्मा अग्रे आगत्य अवदत् – ''मत्स्यावतारं प्राप्य विष्णुः सोमकासुरस्य संहारं कृत्वा वेदानां रक्षणं कृतवान् । तदा पूर्णचन्द्रकान्तिं प्रसारयन् विघ्नेश्वरः प्रकटीभूय तान् मदधीनान् कृतवान् । ततः मया ज्ञानं प्राप्तम् । तदा एव मया विघ्नेश्वरस्य बहवः विशेषाः अवगताः । विघ्नेश्वरः सङ्कल्पसृष्टेः मूलम् । तं ध्यात्वा एव अहं




सृष्टेः आरम्भं कृतवान् ।

विघ्नेश्वरस्य विराट्स्वरूपम् । सः सर्वत्र व्याप्तः अस्ति । अतः सः 'विष्णुः' इति उच्यते । आकाशः, वायुः, अग्निः, जलं, पृथिवी इत्येतेषां पञ्चानां भूतानाम् अधिपतिः अस्ति सः । अतः सः 'महागणाधिपतिः' इति उच्यते । विश्वरूपिणः विघ्नेश्वरस्य शरीरे लक्ष्मीः सरस्वती च विराजेते । एतस्य श्वेतनील-रक्त-श्यमनील-हरित-श्वेत-शिरांसि पञ्च-महाभूतानां प्रतीकभूतानि सन्ति । गजस्य शिरः बलस्य मेधाशक्तेः च प्रतीकम् । मुखं गजस्य भवति चेत् न पर्याप्तं, तेनैव सह बौद्धिक-सामर्थ्यम् अपि भवेत् इति अर्थं सूचयति एतत् । अनन्ते आकाशे नक्षत्रमण्डलानि, ग्रहाः, उपग्रहाः, च सन्ति इति लम्बोदरत्वं स्मारयति । एषः लघुमूषकम् आरुह्य भ्रमति । एतस्य अर्थः अस्ति यत् सूर्यचन्द्रग्रहादयः महामण्डलानि च शुन्ये आकाशे अत्यन्तं कुशलतया सञ्चरणे समर्थाः सन्ति इति । विघ्नेश्वरस्य यात्रा अपि विचित्रा, वैज्ञानिकी च । विघ्नेश्वरः विश्वज्ञानस्य सङ्केतः अस्ति । अतः तं विज्ञानेश्वररूपेणापि अभिजानन्ति जनाः ।

सः विश्वस्य अधिनेता, नियन्ता, अङ्कुश-धारी च । विघ्नेश्वरः बुद्धिबलयोः प्रतीकम् अस्ति । येन हस्तिपकः गजं नियन्त्रयति तम् अङ्कुशं धृतवान् अस्ति एषः गणेशः । अङ्कुशः मनोनिग्रहसाधनस्य प्रतीकम् । विघ्नेश्वरस्य हस्ते विद्यमानः पाशः सूचयति यत् सर्वे स्वकीयेन धर्मेण बद्धाः सन्ति इति । परिपूर्णता पूर्णरूपेण पूर्णः सागरः इव । अतः सः कलशधारणं कृतवान् अस्ति । परशुः विघ्नान् छिनत्ति । अतः एव तेन परशुधारणं कुर्वता स्वस्य विघ्ननिवारणसामर्थ्यं निरूपितम्

अस्ति । विश्वः नादात्मकः अस्ति । ओङ्कारस्य झङ्करणे समर्थायाः विश्ववीणायाः तन्त्रीः स्पृशन् झङ्कारं कुर्वन् अस्ति विघ्नेश्वरः । कोटिशः चराचरप्राणिनां कष्टसुखानि श्रोतुम् एव तस्य कर्णौ विशालौ स्तः । गजस्य नेत्रे लघ्वाकारे भवतः । किन्तु सूक्ष्मदर्शिनी भवतः । सर्वं स्पष्टतया द्रष्टुं सामर्थ्यं भवति तयोः । विघ्नेश्वरः आ परमाणुतः आब्रह्माण्डं परिशीलनं करोति । वक्रा शुण्डा वक्रतां निवारयति । शुण्डा दीर्घा भूत्वा सर्वं स्प्रष्टुं, सर्वेभ्यः दातुं च शक्नोति । समस्तायाः सम्पदः अधिपतिः अस्ति विघ्नेश्वरः । सः भोजनप्रियः । आहारेण शरीरे बलं भवति । शरीरे पुष्टता भवति चेत् एव बुद्धिबलस्य सम्भवः । अतः विघ्नेश्वरः फलानि, पक्वान्नानि, शाकाहारं च सहर्षं स्वीकरोति । भाद्रपदमासे एषः गजसदृशमेघद्वारा शुण्डासदृशीं वर्षाधारां कारयति । मेघगणस्यापि नाथः अस्ति एषः गणनाथः । विघ्नेश्वरः भाद्रपदमासे एव अवतारं गृहीतवान् । यः भाद्रपदमासस्य शुक्लपक्षस्य चतुर्थ्यां विघ्नेश्वरस्य पूजां करोति तेन सङ्कल्पसिद्धिः प्राप्यते । विघ्नानां सम्मुखीकरणार्थं शक्तिः मनोधैर्यं च तेन प्राप्यते ।

पञ्चमवेदः इति प्रख्यातस्य महाभारतस्य लेखनं विघ्नेश्वरेण एव कृतम् । विघ्नेश्वरस्य महिमवर्णनं सुकरं न । यस्य कस्यापि कार्यस्य आरम्भकरणात् पूर्वं विघ्नेश्वरं ध्यात्वा पूजा क्रियते चेत् शुभं भवति इति जनानां विश्वासः । अतः एव विघ्नेश्वरस्य हस्तः सर्वदा अभयमुद्रायुक्तः दृश्यते । महागणाधिपतिः सर्वेषाम् आराध्यदैवम् अस्ति'' एवम् उक्त्वा ब्रह्मा विघ्नेश्वरस्य वृत्तान्तं समापितवान् । तदा शिवः सर्वान् अवलोक्य - ''ब्रह्मणः वचनं श्रुतं किम् ? प्रथमपूजार्थं योग्यः देवः विघ्नेशः एव इति अवगतं खलु ?'' इति उक्तवान् ।

सर्वे अङ्गीकारपूर्वकं शिरः चालितवन्तः । नारदः स्वस्य वीणया हंसध्वनिरागं कृतवान् । सरस्वती हंसनन्दीरागस्य आलापनं कृतवती । यदा पार्वती विघ्नेश्वरं नमस्कर्तुम् उद्युक्ता तदा विश्वरूपः महागणाधिपतिः तां निवारयन् - ''मातः, मास्तु मास्तु । एवं मा करोतु'' इति उक्त्वा स्वस्य विश्वरूपस्य उपसंहारं कृत्वा पूर्ववत् बालविनायकः भूत्वा मातुः चरणौ गृहीतवान् ।





# भविष्यवाणी

राजा चतुरवर्मा चन्द्रगिरिराज्यस्य राजा । सः सर्वदा हसन्मुखः । न तावदेव, अन्यान् अपि हसन्मुखान् करोति स्म सः । तस्य अभिप्रायः आसीत् - 'जीवनं क्षणिकम् । कस्मिंश्चिदपि समये प्राणिनः सर्वे मृताः भवेयुः एव । मनुष्यः तेभ्यः प्राणिभ्यः अपि किञ्चित् अधिककालं जीवेत् कदाचित् । तथापि जीवनस्य क्षणिकता तु न अपगच्छति । अतः सः यावज्जीवम् आनन्देन जीवेत्' इति । सः सदा नूतनाविष्कारम् एव चिन्तयति स्म ।

एकस्मिन् दिने राज्ञ्या सह उद्याने विहरन् सः अवदत् - ''अत्र स्थितानां वृक्षाणां, फलानां, पुष्पाणां च दर्शनं प्रतिदिनं भवत्येव । ततः उद्यानविहारे प्रकृतिदर्शने वा कोऽपि विशेषः नास्ति । अतः भवती नूतनं कमपि विषयं वदतु तावत्'' इति ।

पत्युः वचनेन हसन्ती राज्ञी उक्तवती - ''भवान् बहुविचित्रः अस्ति । प्रतिदिनम् अहं नूतनान् विषयान् कुतः आनयेयम् ?'' इति ।

राजा चिन्तामग्नः अभवत् । किञ्चित्-समयानन्तरं सः अवदत् - ''तर्हि एवं भवतु । अत्र स्थितेन उद्यानपालकेन सह किञ्चित् नाटकीयव्यवहारं कृत्वा समययापनं करवाम । तेन आनन्दः भविष्यति'' इति । ततः तत्र वृक्षाणां जलसेचने निरतम् उद्यानपालकं सः आह्वयत् ।

उद्यानपालकः धावन् आगतः, राज्ञः पुरतः सविनयं स्थितश्च । राजा स्वकण्ठे स्थितं मुक्ताहारं निष्कास्य तस्मै दत्तवान् । राज्ञः इच्छा एवम् आसीत् यत् अनिरीक्षितरूपेण मुक्ताहारं प्राप्य उद्यानपालकः किं कुर्यात्, किं वा वदेत् इति ज्ञातव्यम् इति । किन्तु सः उद्यानपालकः कामपि प्रतिक्रियां न प्रकटितवान् । विनावचनं सः तं मुक्ताहारं स्ववस्त्रे संस्थाप्य प्रस्थितः एव ।

उद्यानपालकस्य अनेन व्यवहारेण राजा आश्चर्यचकितः सन् अपृच्छत् - ''भोः ! विनाकारणं मया भवते अमूल्यः हारः दत्तः ।



तथापि भवान् न आश्चर्यचकितः, न वा सन्तुष्टः । किमर्थम् ?'' इति ।

''प्रभो ! अद्य भवता मह्यं हारः दीयते इति पूर्वमेव ज्ञातम् आसीत् मया'' इति सः उद्यानपालकः अवदत् ।

तस्य वचनेन आश्चर्यचकितः राजा पृष्टवान् – ''पूर्वमेव भवता ज्ञातम् आसीत् किम् ? एतत् कथं शक्यम् ? केन भवान् उक्तः ?'' इति ।

''एतं विषयं कश्चन मुनिश्रेष्ठः माम् उक्तवान् आसीत् । चतुर्भ्यः दिनेभ्यः पूर्वम् अहं पूर्वस्यां दिशि स्थितं मम ग्रामं प्रति गतः । तत्र ग्रामीणाः माम् अवदन् – 'ग्रामं प्रति कश्चन मुनिः आगतः अस्ति । तेन उक्ता भविष्यवाणी कदापि मिथ्या न भविष्यति' इति । अहं तं मुनिं द्रष्टुं गतवान् । मद्दर्शनसमनन्तरमेव सः मुनिः दण्डम् उपरि कृत्वा अवदत् – 'भवान् बहुभाग्यशाली अस्ति । भवते शीघ्रमेव राजा एकं हारं दास्यति' इति ।''

एतावत् उक्त्वा सः उद्यानपालकः पुनः अवदत् – ''प्रभो ! यदा भवता अहम् आहूतः तदा मया ज्ञातं यत् मह्यं हारं दातुमेव भवान् माम् आहूतवान् इति'' इति ।

एतत् श्रुत्वा राजा आश्चर्येण स्तम्भितः अभवत् । ततः त्वरमाणः सः राज्ञीम् अवदत् – ''आवाम् अपि तस्य मुनिवरस्य दर्शनं करवाव । ...'' इति ।

राज्ञः कथनं मध्ये एव निरुध्य उद्यानपालकः अवदत् – ''सः मुनिः स्त्रीभ्यः दर्शनं न ददाति'' इति ।

एतत् ज्ञात्वा राज्ञी खिन्ना । तथापि सा राजानम् उक्तवती – ''महामुनीनां व्यवहारः कदाचित् अस्माभिः ज्ञातुं न शक्यते । अतः मम आगमनं मास्तु । भवान् मुनेः दर्शनं कर्तुं गच्छतु'' इति ।

राज्ञे राज्ञ्याः सूचना न अरोचत । अतः सः – ''देवि ! भवतीं विना गमनेन किम् ? पूर्वमेव वयं भविष्यं जानीमः चेत् जीवने कोऽपि आनन्दः न भविष्यति अपि । एवं ननु ?'' इति उक्तवान् ।

तदा राज्ञी अवदत् – ''किमर्थं भवता एवं चिन्त्यते ? भविष्यं ज्ञातं चेत् जीवनम् इतोऽपि सुन्दरं कर्तुं शक्नुयाम । अतः भवता गन्तव्यम् एव'' इति ।

राजा राज्ञ्याः वचनं निराकर्तुम् अशक्नुवन् परेद्यवि रथेन मुनेः दर्शनं कर्तुम् अगच्छत् । किन्तु सायं चिन्तायुक्तः सन् सः प्रत्यागतः ।

तस्य मुखे चिन्ता स्पष्टतया दृश्यते स्म ।

राज्ञी अनेकवारं चिन्तायाः कारणं पृष्टवती । किन्तु राजा मौनम् एव अवलम्बितवान् । किमपि उत्तरं न दत्तवान् ।

''मत्तः कमपि विषयं गोपयन् अस्ति भवान् । तेन मुनिना किम् उक्तम् ? वदतु । मां प्रति भवता वक्तव्यमेव'' इति वदन्ती राज्ञी स्वशिरसि तस्य हस्तं स्थापयित्वा अनुरोधं कृतवती ।

तदा राजा मन्दस्वरेण तत्र यद्यत् अभवत् तत्सर्वम् अवदत् - ''मम वज्रखचितपादरक्षां दृष्ट्वा मुनिना उक्तम् आसीत् - 'राजन् ! शीघ्रमेव भवतः स्थितिः शोचनीया भविष्यति । तदा भवतः पादे पादरक्षा अपि न भवति । पादरक्षां प्राप्तुं भवान् अन्यस्य पुरतः साञ्जलि प्रार्थयेत् । कश्चन भिल्लयुवकः भवतः शिरसि पुनः मुकुटं स्थापयिष्यति' इति । मुनेः वचनं श्रुतवतः मम शरीरं कम्पितम् अभवत् । वज्राघातं प्राप्तवान् इव अहं विना वचनं ततः प्रत्यागतः'' इति ।

एतावद् उक्त्वा राजा दुःखेन पुनः अवदत् - ''देवि ! मुनेः वचनेन ज्ञायते यत् कोऽपि पराक्रमी राजा अस्माकं राज्यम् आक्रामेत् इति । तेन अस्माभिः पराजयः प्राप्येत । तदा पादरक्षां विना वने अस्माभिः अटनं क्रियेत । किन्तु सः भिल्लयुवकः कदा अस्माकं साहाय्यं करिष्यति, पुनः कदा अस्माभिः स्वराज्यं प्राप्स्यते इति तु न ज्ञातम्'' इति ।

एतत् श्रुत्वा राज्ञ्याः मतिः भ्रष्टा । सा किंकर्तव्यतामूढा अभवत् । ततः तया उक्तम् - ''भवता सः मुनिरेव प्रष्टव्यः आसीत् । अस्मात् सङ्कटात् कथं मोचनं प्राप्यते, तस्य उपायः कः इति । प्रायः पूजादिकं करणीयं स्यात् । पुनः तस्य समीपं गत्वा एतत् ज्ञात्वा आगच्छतु'' इति ।

परेद्यवि राजा पुनः मुनिं द्रष्टुं प्रस्थितः ।



अरण्यमार्गे गमनसमये कश्चित् व्याघ्रः हरिणीं ग्रहीतुं धावनं कुर्वन् रथस्य पुरतः आगतः । व्याघ्रं दृष्ट्वा रथाश्वः भीतः सन् रथम् आकर्षन् एव अग्रे गतः । ततः कयाचित् शिलया घट्टितः सन् सः पङ्के पतितः । राजा अपि रथात् अधः पङ्के पतितः । सारथिः अश्वं समीकर्तुं प्रयत्नं कुर्वन् विफलः जातः । सारथिरपि अन्यत्र पतितः ।

राज्ञः पादरक्षा तत्र पङ्के पतिता । पादरक्षां विना एव राज्ञा अग्रे गतम् । मार्गः कण्टकमयः आसीत् । राजा कथञ्चित् कष्टेन गच्छन् रथसमीपम् आगतवान् । सारथिना आनीतां पादरक्षां धृतवान् ।

तस्मिन् समये एव कश्चन धनुर्धारी भिल्ल-युवकः तेन मार्गेण आगतः । गुल्ममध्ये पतितं राज्ञः मुकुटं तेन दृष्टम् । तत् स्वीकृत्य स्ववस्त्रेण मुकुटं स्वच्छीकृत्य सः राज्ञः शिरसि स्थापयन् राजानम् अपृच्छत् - ''महाराज ! भवतः शरीरे काऽपि पीडा तु न अभवत् किल ?'' इति ।

तत्समये सारथिः रथं राज्ञः समीपम् आनीतवान् । राजा रथे उपविश्य अवदत् - ''इदानीं मुनेः समीपं गमनं मास्तु । राज-भवनमेव गच्छतु'' इति ।

सूर्यास्तसमये राजा प्रासादं प्रत्यागतः । राज्ञः पङ्कमयं वस्त्रं दृष्ट्वा भीता राज्ञी कम्पमान-स्वरेण अपृच्छत् - ''किम् अभवत् ? भवतः वस्त्रं कथं पङ्कमयम् अभवत् ?'' इति ।

राजा प्रवृत्तं सर्वम् उक्त्वा - ''निश्चयेन मुनेः भविष्यवाणी मिथ्या न जाता । तेन यत् कथितं तथैव अभवत् । किन्तु भविष्यं श्रुत्वा अहं विना कारणम् उद्विग्नः अभवम् । तथैव मया अनुभूता मानसिकी यातना अपि अवर्णनीया । भविष्यस्य अज्ञानेनैव जीवने आनन्दः भवति । तदेव सुखस्य मूलं कारणमपि'' इत्यपि अवदत् ।

राज्ञी अपि एतत् अङ्गीकृत्य - ''एतावन्तम् अल्पं विषयं ज्ञातुं भवता महती वेदना अनुभूता । अहमपि व्याकुला अभवम् भविष्यवचनस्य वास्तविकः अर्थः न गृहीतः आसीत् अस्माभिः'' इति वदन्ती सन्तोषेण हसितवती ।





# सेवकेन ज्ञापितं तथ्यम्

देवशास्त्री दीर्घकालं यावत् अध्यापकः आसीत् । यदा तस्य निवृत्तिः जाता तदा सम्माननसमारम्भः कश्चन प्रवृत्तः । तस्यां सभायां वक्तारः सर्वे तस्य प्रशंसां कृतवन्तः । 'एतादृशः ज्ञानसम्पन्नः प्रज्ञाशाली जनः अन्यः कोऽपि नास्ति प्रायः' इति केचन उक्तवन्तः । पुनः केचन – 'एषः पाण्डित्येन सर्वान् अपि अतिशेते' इति उक्तवन्तः । अपरे केचन तस्य अध्ययनशीलतां प्रशंसितवन्तः । इतरे केचन पाण्डित्यपूर्णं तस्य वाक्प्रवाहं स्तुतवन्तः । एतादृशानि प्रशंसावचनानि श्रुत्वा देवशास्त्री प्रसन्नः जातः ।

सायं गृहं प्रत्यागतः सः पुष्पमालां शाटिकादिकं च पत्न्यै सावित्र्यै यच्छन् अवदत् – ''सावित्रि ! अहं प्रकाण्डपण्डितः अस्मि, मेधासम्पन्नः च अस्मि । तथापि कश्चन सन्देहः – 'मम कक्ष्यायां सदा छात्रसङ्ख्या अल्पा एव भवति स्म किमर्थम् ?' इति । एतस्य उत्तरं तु अद्यावधि न प्राप्तं मया'' इति ।

''प्रायः भवान् छात्रान् वेत्रदण्डेन ताडयति इति भाति'' इति उक्तवती सावित्री ।

''वेत्रदण्डः मया कदापि न स्पृष्टः एव । एवं स्थिते ताडनस्य का वा प्रसक्तिः ?'' इति अवदत् देवशास्त्री ।

''भवतः एतत् भयङ्करं श्मश्रु दृष्ट्वा भीताः जाताः स्युः छात्राः । भवतः श्मश्रु भयजनकं तु अस्ति एव । विवाहानन्तरम् ऐदम्प्राथम्येन तत् दृष्ट्वा अहं तु नितरां भीता आसम्'' इति हसन्ती उक्तवती सावित्री ।

''मम शालायां मादृशाः श्मश्रुधारिणः द्वित्राः आसन् । अतः छात्राः श्मश्रुतः भीताः भवन्ति स्म इत्यपि वक्तुं न शक्यते'' इति उक्तवान् देवशास्त्री ।

''तर्हि भीतिकारणं भवान् एव चिन्तयतु'' इति उक्त्वा मौनम् आश्रितवती सावित्री ।

निवृत्तिप्राप्त्यनन्तरं देवशास्त्री स्वग्रामं प्रतिनिवृत्तः । यतः नगरवासः महार्घः इति सः जानाति स्म । नगरे सुखेन दिनानि यापयितुं



यावत् धनम् आवश्यकं तावत् न आसीत् देवशास्त्रिणः समीपे । ग्रामम् आगतः सः आ प्रातः आसायं पुस्तकानि पठन् स्वस्य समयं यापयति स्म ।

तस्य दिनचर्यां दृष्ट्वा सावित्री कदाचित् उक्तवती – ''निरन्तरज्ञानसङ्ग्रहमात्रेण कः लाभः ? वितरणात् एव खलु भवति ज्ञानस्य सार्थक्यम् ? 'व्यये कृते वर्धत एव विद्या' इति आर्योक्तिः एव अस्ति । एतस्मिन् ग्रामे अशिक्षिताः बहवः सन्ति । तेषां शिक्षणं चिन्तयतु भवान् । तेन ते उपकृताः भवेयुः, भवतः गौरवं वर्धेत, समयः अपि योग्येन क्रमेण यापितः स्यात्, पुण्यमपि सम्पादितं भवेत्'' इति ।

पत्न्याः एषा सूचना देवशास्त्रिणः सम्मता जाता । अतः सः अशिक्षितजनानां गृहं गत्वा उक्तवान् यत् विजयदशमीतः अहं निश्शुल्क-पाठनं करिष्यामि इति ।

विजयदशमीदिनं सम्प्राप्तम् । रात्रौ भोजनं समाप्य देवशास्त्री पुस्तकानि गृहीत्वा पाठशालां गतवान् । किन्तु तत्र बहवः न आसन् एव । धनिकस्य सेवकः रामः एकः एव तत्र उपविष्टः आसीत् ।

ग्रामीणानाम् एतं व्यवहारं दृष्ट्वा देवशास्त्री नितरां खिन्नः । विद्याभ्यासार्थं बहवः आगच्छेयुः इति सः चिन्तितवान् आसीत् । निराशः सः रामं दृष्ट्वा अवदत् – ''भवान् एकः एव उपस्थितः । एकं किं वा पाठयेयम् ? भवान् अपि गच्छतु'' इति ।

तदा रामः अवदत् – ''श्रीमन् ! अहं यदा धेनूनां चारणार्थं गच्छामि तदा एका एव धेनुः आगच्छति चेदपि यथापूर्वं आसायं चारयित्वा एव आगच्छामि'' इति ।

देवशास्त्री एतस्य वचनस्य तात्पर्यं

अवगतवान् । पठने तस्य उत्साहं दृष्ट्वा सन्तुष्टः सः द्वित्रघण्टाः यावत् बहून् विषयान् बोधितवान् । जीवने शिक्षणस्य किं महत्त्वम् इति विस्तरेण उक्तवान् सः । ततः अक्षराभ्यासम् अपि कारयित्वा रामं गृहं प्रेषितवान् । स्वयं च तृप्त्या गृहं गतवान् च ।

अनन्तरदिने पुस्तकानि गृहीत्वा पाठशालां गतवान् सः । किन्तु तस्मिन् दिने रामः अपि न उपस्थितः आसीत् । शून्या पाठशाला !

रामस्य एतस्मात् व्यवहारात् देवशास्त्री नितरां खिन्नः जातः । कोपेन उत्थाय सः धनिकस्य गृहं गतवान् । तत्र सुप्तवन्तं रामम् उत्थाप्य - ''भो महाभाग ! किं भवतः पठनोत्साहः दिनाभ्यन्तरे एव समाप्तः ? 'एका एव धेनुः चेदपि आसायं चारयिष्यामि एव अहम्' इति वदन् ह्यः मम पुरतः स्वश्रेष्ठतां प्रतिपादितवान् आसीत् खलु भवान् ? भवतः कथनम् अङ्गीकृत्य अहम् एकाकिनम् अपि भवन्तं श्रद्धया पाठितवान् । किन्तु अद्य पाठशालायां भवतः मुखदर्शनम् एव नास्ति । किम् एतत् ? कथं लुप्तः भवतः सः पठनोत्साहः ?'' इति अपृच्छत् ।

तदा रामः करौ योजयित्वा - ''श्रीमन् ! एका अपि धेनुः चार्यते इति मया उक्तम् आसीत् । किन्तु तृणराशिः एव तस्याः मुखे पूर्यते इति तु न उक्तम् आसीत्'' इति शान्तस्वरेण उक्तवान् ।

एतत् वचनं कशाघातकरम् इव अभासत शास्त्रिणः मनसि । स्वकक्ष्यायां छात्राणां सङ्ख्या किमर्थं न्यूना भवति स्म इत्यस्य कारणम् अवगतं तेन । 'अध्यापकः महाज्ञानी भवेत् चेदपि छात्राः यथा अवगच्छेयुः तथा, तेषां स्तरस्य अनुगुणं यः पाठनं करोति सः एव उत्तमः अध्यापकः भवितुम् अर्हति । तादृशम् अध्यापनं प्रवृत्तं चेदेव छात्राः अध्ययने आसक्तिं दर्शयन्ति' इत्येतत् तथ्यं सः अवगतवान् ।

स्वस्य न्यूनता का इति अवगतम् आसीत् इत्यतः छात्रस्तरानुगुणं पाठने मतिं कृतवान् देवशास्त्री । अतः अचिरात् एव अशिक्षिताः बहवः ततः शिक्षणं प्राप्तवन्तः । एवं शास्त्रिणः ज्ञानं सार्थकं जातम् ।





# अहङ्कारः

शिवशर्मा रामपुरस्य निवासी आसीत् । सः न केवलं पण्डितः, अपि तु महाज्ञानी अपि । अतः न केवलं तद्ग्रामस्थाः, अपि तु समीपस्थाः ग्रामवासिनः अपि तस्मिन् आदरं प्रदर्शयन्ति स्म । तस्य गृहे तदा तदा पाण्डित्यपूर्णाः चर्चाः प्रचलन्ति स्म ।

पार्वती तस्य एकमात्रपुत्री आसीत् । सा अपि विदुषी एव । सा अतिशीघ्रमेव बहून् सूक्ष्मान् अंशान् अवगच्छति स्म । अतः गच्छता कालेन सा अपि चर्चायां भागवहनम् आरब्धवती । वाक्पटुतया, विद्वत्तया च सा बहून् पण्डितान् चर्चागोष्ठ्यां पराजितवती ।

शिवशर्मा कदापि आत्मख्यापनं न करोति स्म । सः सर्वदा 'मम ज्ञानम् अपूर्णम्, मया ज्ञातव्यम् इतोऽपि बहु अस्ति' इति वदति स्म । किन्तु पार्वती 'अहं सर्वं जानामि' इत्येव प्रतिपादयति स्म । 'मया अज्ञातः विषयः कोऽपि भवितुं न अर्हति' इति तस्याः मतम् आसीत् । यदा वृद्धाः, ज्ञानिनः, पण्डिताः च परस्परं चर्चायां मग्नाः भवन्ति स्म तदा सा मध्ये प्रविश्य वादारम्भं करोति स्म । तेषां सन्देहान् निवारयति स्म । तस्याः एतादृशः स्वभावः दिने दिने वर्धमानः आसीत् । चर्चायां कश्चित् दोषं करोति चेत् सा तं दोषं समीकरोति स्म । अनन्तरं तादृशानाम् अपूर्णज्ञानस्य उपहासम् अपि करोति स्म ।

पार्वत्याः सः अहङ्कारः बाल्यादेव आसीत् । किन्तु तस्याः पित्रा विशेषावधानं न दत्तम् आसीत् । 'क्रमशः पुत्र्यां परिवर्तनं भवेत् । तस्याः अहङ्कारः न्यूनः भवेत्' इति भावितवान् आसीत् सः ।

तथापि शिवशर्मा तां जागरयन् द्वित्रवारं पुत्रीम् उद्दिश्य - ''ज्येष्ठानां सम्भाषणस्य मध्ये प्रवेशकरणम् उचितं न । यतः कदाचित् तेन ते खेदम् अनुभवेयुः'' इति उक्तवान् ।

तदा पार्वती पितरं - ''पाण्डित्यस्य ज्ञानस्य वा वयसा सह कः सम्बन्धः ? ज्येष्ठः नाम सः सर्वं जानाति इति अर्थः न खलु । मूर्खः

सर्वदा मूर्खः एव तिष्ठति'' इति वदति स्म ।

पार्वत्याः मनसि कदाचित् सन्देहः उत्पन्नः भवति स्म - ''मम ज्ञानम् इतरैः न अवगन्तव्यम् इति पितुः अपेक्षा स्यात्'' इति ।

पार्वती सप्तदशवर्षीया अभवत् । तदापि तस्याः अहङ्कारभावः पूर्ववत् एव अवशिष्टः । यद्यपि शिवशर्मा सर्वज्ञः आसीत् तथापि पुत्र्यां कथं परिवर्तनम् आनेतव्यम् इति ज्ञातुम् अशक्तः आसीत् । सः बहु चिन्तनम् आरब्धवान् । मित्राणां पुरतः स्वस्य दुःखं प्रकटितवान् ।

नवरात्रोत्सवः प्रचलति स्म । राजभवने पण्डितानां गोष्ठी आयोजिता आसीत् । शिवशर्मा अपि तत्र निमन्त्रितः आसीत् । तस्य अनुपस्थितौ अपि पण्डिताः शिवशर्मणः गृहे सम्मिल्य चर्चागोष्ठीं कुर्वन्ति स्म । यथापूर्व पार्वती मध्ये मध्ये हस्तक्षेपं करोति स्म ।

एकदा पण्डिताः कञ्चित् विषयम् अधिकृत्य चर्चां कुर्वन्तः आसन् । पार्वती तेषां चर्चाम् अवधानपूर्वकं शृण्वती आसीत् ।

''ग्रामे विद्यमानस्य प्राचीनसरोवरस्य तीरे स्थिते मण्डपे कश्चित् किमपि लिखितवान् अस्ति । किन्तु कोऽपि तत् पठितुं न शक्तवान् । सर्वेऽपि निराशतया प्रत्यागच्छन्तः सन्ति'' इति ते वदन्तः आसन् ।

पण्डितानां वचनं श्रुत्वा पार्वती झटिति - ''अहं तत् पठिष्यामि । केनचित् लिखितं यदि अहं पठितुं न शक्नोमि तर्हि आत्मानं शिवशर्मणः पुत्री इति कथयितुम् अनर्हा भविष्यामि'' इति दर्पपूर्णेन स्वरेण उक्तवती ।

पार्वती मण्डपे लिखितस्य विषयस्य पठनार्थं गच्छन्ती अस्ति इति वार्ता ग्रामे सर्वत्र प्रसृता । ग्रामस्थाः सर्वे मण्डपसमीपम् आगतवन्तः । पार्वती तत्र आगत्य जवनिकाम्



अपसार्य भित्तौ लिखितस्य पठनम् आरब्धवती ।

तत्र एवं लिखितम् आसीत् - ''यः/या एतत् कर्तुं शक्नोति सः/सा एव अत्र लिखितं पठतु । अस्मिन् सरोवरे दशपादपरिमितः पङ्कः अस्ति । अहम् इदानीम् एव खनित्रं कण्डोलं च स्वीकृत्य तत्र गच्छामि । तत्र गत्वा एकाकी/एकाकिनी एव सर्वं पङ्कं निष्कासयामि । अत्र विद्यमानाः सर्वेऽपि साक्षिणः'' इति ।

यदा सा पठनं समापितवती तदा कश्चित् खनित्रं कण्डोलं च आनीय तस्याः पुरतः स्थापितवान् ।

आश्चर्यचकिता भूत्वा सा - ''किम् एतत् ?'' इति पृष्टवती ।

तत्र उपस्थिताः - ''पङ्कं निष्कासयतु भवती'' इति उक्तवन्तः ।

तदा सा - ''अहं तु 'पठिष्यामि' इति उक्तवती तावदेव । 'करोमि' इति न उक्तं खलु मया !'' इति उक्तवती ।

तत्र उपस्थितेषु कश्चित् ज्येष्ठः - ''अत्र विद्यमानस्य पठनं न कृतम् इत्यत्र अस्माकं मूर्खता अज्ञानं वा कारणम् इति वा भवत्याः भावना ? अत्र स्पष्टं लिखितम् अस्ति यत् यः अत्र लिखितं पठति तेन तत् कार्यं करणीयम् इति । अतः एव वयं मनसि केवलं पठितवन्तः । उच्चस्वरेण पठनपूर्वकम् अस्माभिः मूर्खता न आचरिता । भवती तु अविचिन्त्य एव सर्वं पठितवती । अतः इदानीं खनित्रं कण्डोलं च स्वीकृत्य कार्यारम्भं करोतु । भवत्या वचनबद्धया भवितव्यम् एव'' इति उक्तवान् ।

पार्वत्याः नेत्राभ्याम् अश्रूणि निर्गतानि । तदा कश्चित् ज्येष्ठः - ''यदा इच्छा तदैव बुद्धिमत्ता न प्रदर्शनीया । युक्ते समये, युक्ते अवसरे, आवश्यकतायां सत्याम् एव बुद्धिमत्ता प्रदर्शनीया । बुद्धेः उपयोगः तदा एव करणीयः, यदा आवश्यकता भवति'' इति उक्तवान् ।

शिवशर्मणः आगमनात् पूर्वमेव पार्वत्यां महत् परिवर्तनं जातम् आसीत् । तस्याः दर्पस्य दमनार्थं मित्रैः कृतं प्रयत्नं श्रुत्वा शिवशर्मा बहु सन्तुष्टः अभवत् । पुत्र्याः पार्वत्याः स्वभावे जातं परिवर्तनं दृष्ट्वा शिवशर्मा तृप्तः आसीत् ।



चन्दमामायाः प्रस्तुतिः

12

# अजेयः गरुडः

*चित्रं* - **पाणिः**

चन्द्रपुर्याः प्रधानमन्त्री आदित्यः पित्रा दत्तायाः प्रतिमायाः पूजां करोति । एतस्मात् तस्मिन् शारीरकपरिवर्तनानि भवन्ति । तच्च अन्यैः न ज्ञायते स्म । आदित्यः राजानम् अपहरणात् रक्षति । एका अशरीरवाणी नरेन्द्रदेवं तत्पुत्रं च वदति यत् कश्चन गरुडः राज्ञः रक्षणं करोति इति ।

देववाण्या उक्तं गरुडस्य नाम श्रुत्वा नरेन्द्रदेवः आश्चर्यचकितः भवति ।

किं सः गरुडः कोऽपि प्रेतात्मा ?

स्यादपि । सः शक्तिशाली अस्ति । मम गुरुः तान्त्रिकःअधिकं जानीयात् कदाचित् ।




सः सर्पैः सह एकाकितया निवसति । आत्मानं नागबन्धुं कथयति सः । श्रावणसमये पर्वतमूले स्थिते मन्दिरे शिष्येभ्यः दर्शनं ददाति सः ।





पर्वतप्रदेशं प्रति नरेन्द्रदेवस्य गमनस्य अनन्तरम्...

एषः ध्वनिः कुतः ? मम पितुः चित्रं कम्पमानं दृश्यते ।

आदित्यः चित्रस्य पृष्ठभागतः एकां पेटिकां स्वीकरोति ।

पिञ्छस्य उड्डयनम् आरब्धम् । आदित्यः गरुडस्य रूपं प्राप्तवान् क्रमेण ।

रवीन्द्रदेवः रक्षकैः सह आदित्यस्य निवासस्थानं प्रति गच्छति ।

एतदवसरे सः गृहीतः भविष्यति

शयनागारस्य द्वारम् आकस्मिकतया उद्घाटितं भवति । सैनिकाः अनेकान् प्रहारान् प्राप्य ततः पलायन्ते ।

सः विलक्षणः प्रकाशः कः ? किमपि न दृश्यते खलु ?

भवनं प्रति प्रत्यागमनस्य अनन्तरम्..
श्रीमन् ! प्रधानमन्त्री स्वप्रकोष्ठे न दृश्यते ।
सः कथं पलायन कर्तुम् अर्हति ?
भवन्तः सम्यक् न दृष्टवन्तः स्युः, अलसशिरश्रामणयः ।
सः प्रकोष्ठात् बहिः न आगतः इति प्रतिज्ञापूर्वकं वक्तुं शक्नुमः ।








लिख्यतां शीर्षिका

# चित्रशीर्षिकास्पर्धा





**उपरितनं चित्रद्वयं दृष्ट्वा परस्परसम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?**

सम्पत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

युक्ता शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू. १००/- पुरस्काररूपेण दास्यन्ते ।

पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

**'फेब्रवरी' मासीयस्पर्धाशीर्षिकाप्रेषकः -**

**सुधीर के. वि.**
**माधवसदनम्, ओलैल्,**
**थेवल्ली पो०, केरलम्**

### पुरस्कृतशीर्षिका





**लब्धुं कष्टं किं तव अस्ति ?**
**हस्ते तत्खलु इह मम अस्ति !!**

**चन्दमामायाः वार्षिकं ग्राहकशुल्कं -**

**भारते रू. १२० - ००**

Payment in favour of CHANDAMAMA INDIA LIMITED
No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 600 026 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : Viswam

